॥ अथाभोग ॥

रजतशिखरि-तुङ्ग-शृङ्ग-नियतनिजनिकेतनम् ॥ ३ ॥

सौभगमधुराङ्ग-भङ्गनिर्जित झषकेतनम् ॥ ४ ॥

पञ्चमः प्रबन्धः

( कल्याणाहारी[1] रागेण गीयते )

॥ झम्पकतालेन ॥

चरण परिचरण परगोपनृपनन्दनम् ।
नलिन-भवकृत-सतत-वन्दनम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

नन्दीशनन्दनं प्रणतहरिचन्दनम् ।
स्कन्दसिन्दूर[2] वदननलिनम् ॥ २ ॥

सुखितसुरलोककृतशश्वदभिनन्दनम् ।
नमत-तापित[3] हृदय-चन्दनम् ॥ ३ ॥

विषय विषपरिमुषित[4] लोकमतिबन्धनम् ।
परिशमितसुधनभवबन्धनम् ॥ ४ ॥

षष्ठः प्रबन्धः

( आशावरी रागेण गीयते )

॥ त्रिपुट-तालेन ॥

सारफलनिधिमपि समादृततीव्रयोगसमाधिकम् ।
लोक-सेतु-धुरीण-भाव-गुणाधिकं निरुपाधिकम् ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

1. ख. कल्मशीहारी ।
2. ख. सुन्दसिन्दुर ।
3. ख. ग. नमत हृत् तापित ।
4. ख. ग. विषयपरिमुषिक ।

देव देव भवन्तमेव हृदन्तरमिह[1] शङ्करम् ॥ २ ॥ क ॥

पाहि माममरेन्द्र भव तव पादपङ्कजकिङ्करम् ॥ ३ ॥

॥ अथाभोगः ॥

त्वामृते वलते न मे मतिरन्यदेवमुपासितुम् ।
तेन लोकपते न किमु चित्रमत्र मामनुशासितुम् ॥ ४ ॥

**सप्तमः प्रबन्धः**

( वसन्तरागेण गीयते )

॥ अड्ड-तालेन ॥

नीलाम्बुजबन्धुर-लीलालयकन्धर ।
हारायितपन्नग-साराहितसौरभ ॥
माधव विधिसम्भव मम हर शरणं भव ।
निर्गुणगुणनायक निःश्रेयसदायक[2] ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

ताण्डवविधिपण्डितपाण्डरशशिमण्डित—
कायक वरदायक निजगुणपरिगायक[3] ॥ २ ॥
नारायणपूजितदारार्द्धतनूजित ।
सन्दीपितमारक नन्दिप्रिय-कारक ॥ ३ ॥ (ख)

---

(क) नि अई अई अईति अई अई अईति अई अई अई ईत
आ ई आ । अईति आईअ ।

(ख) (१) सा सा रि ग म म रि ग म प सा रि ग म प सा रि ग म ध नि नि ध म
प ग ति प रि ण प स नि ध म । सरि धनि धम म ध नि ।

(२) ता झेक्रिता ताक्रिता झेक्रिता थोङ्कट कट थोङ्कट तेना तेना तेना ।

---

1. ख. हृदन्तरमिह ।
2. ख. निःश्रेयसदायत ।
3. ख. परिपायक ।

॥ अथाभोगः ॥

लङ्काधिपतोलन-शङ्काहितदोलन —
कैलासनिजालय-शैलचलनाभय ।
विस्मितगणमानन सस्मितरुचिरानन —
शारदशरणागत रावणकरुणावृत ॥ ४ ॥

**अष्टमः प्रबन्धः**

( केदाररागेण गीयते )

॥ झम्पकतालेन ॥

सकलनिगमहितं सदाशिव सज्जनपरसहितम् ।
शरणागतजनतापरिपालन सन्ततसमवहितम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

सदाशिवचरणकमलमुदितं[1] तरुणमरुणमुदितम् ।
शरणमुपैमि तवाहममङ्गलमिह बितनुदितम् ॥ २ ॥

ललितसलीलगतं कलितमनोऽभिमतम् ।
गलितपरागसुरभितदिगन्तमनन्तमहिमविततम् ॥ ३ ॥

तापसहृदि निहितं[2] तापशमनविहितम् ।
तापतिमिरचय[3] चण्डकरामलमण्डलमनपिहितम् ॥ ४ ॥

इति श्रीधराधिराजनन्दिनीरमणचरणारविन्दप्रमोद[4]-निरन्तरमासादित[5] प्रभूतपूतशैवाचार-प्रचार-प्रताप-भूवर-गदाधरमान्धातृविरचितं मेदिनीकोद्वेलितं[6] ललितस्वरपाटतेनाङ्गानैकरागबन्धं शङ्करप्रियङ्करं प्रबन्धं सहृदयानन्दमभिनन्दतु सज्जन ।

---

1. ख. चरणमनलमुदितं ।
2. ख. निमूतं ।
3. ख. तायतिमिरचय ।
4. ख. चरणारविन्द प्रदोह ।
5. ख. निरन्तरासीदित
6. ख. मेदिनीजातनलिनं ।

## नवमः प्रबन्धः

( भैरवरागेण गीयते )

॥ एकतालीतालेन ॥

शारदसरसिजसोदरवदनम् ।
मुकुलितकुन्दकदम्बकरदनम्[1] ॥
॥ ध्रुवपदमिदम् ॥ १ ॥

चिन्तय हृदय भवाय भवं तम् ।
दीनजनावन[2] नियमवन्तम् ॥ २ ॥

अरुणतमोपह-करुणदृगन्तम् ।
सन्ततमपि दिशि दिशि विकिरन्तम् ॥ ३ ॥

रसिक-मनोरम-वचनमुदीतम् ।
जयति गदाधर-कविवरगीतम् ॥ ४ ॥

लावण्यं किमु वर्णनीयपदवीमारोहतां मादृशां
गौरीसंचितधर्मकर्मणि परीणाम[3] गिरीशस्य तव ।
येनापाङ्गदृशाप्यनङ्गजयिना शैलाधिराजात्मजा
लोकेशानपहाय नायकगुणैर्लेभे परां निर्वृतिम् ॥ १८ ॥

दग्ध्वा योगबलेन जन्मनि पुरा दक्षाध्वरध्वंसिनो[4]
लोकेशस्य सतीमतीति[5] विदिता यासीत्किल प्रेयसी ।
तामेनां समुपेयुषीं शुभपरिपाकेन सा केनचि—
न्मेना भूधरराज[6] पट्टमहिषी सूते स्म तस्मात्सुताम् ॥ १९ ॥

काले नाथ वयोविशेषललितां नाथः सुतां भूभृतां
तां मुक्ताङ्कशशाङ्कसुन्दरमुखीमुद्भिन्नतुङ्गस्तनीम् ।
पश्यन्बालकुरङ्गलोलनयनां शुम्भन्नितम्बस्थलां
तस्या रूपकुलोचितं वरमृते चिन्तां[7] दुरन्तां ययौ ॥ २० ॥

---

1. ख. कदम्बनरदनं
2. ख. दीनाधनावन ।
3. ख. परिणामं ।
4. ख. ध्वंसिये ।
5. क. लोंशस्य सती...पाठः कीटदष्टः ।
   ख. लोकेशस्य मतीति ।
6. ख. तन्मनात्वधरषट्टराज ।
7. ख. वीक्ष्य ।

अथामरमुनेर्मुखादतिसुखाकरं सादरं
वरं वत दिगम्बरं समवगम्य सम्यङ्मनाः ।
मनागपि ततः परं न नृपतिं न वा स्वर्पतिं
परं मृगयतेऽनिशं स गिरिशं गिरिः शङ्कितः ॥२१ ॥

विज्ञाय विज्ञाननिधिं समाधिं
तमास्थितं सुस्थमधित्यकायाम् ।
भक्त्यैव साकं सुतया स तस्य
समाससादाश्रम[1]मादिपुंसः ॥ २२ ॥

सं तुतोषयिषन्नेष तं तुषारधराधरः ।
ववन्दे गीतबन्धेन स्तुवन्देवं महानटम् ॥ २३ ॥

## दशमः प्रबन्धः

(आशावरीरागेण गीयते)

॥ त्रिपुट-तालेन ॥

अमलनखकिरणमणिकेशरावलिललितमङ्गुलीदलचरणकञ्जसारम् ।
सकलसुरगणमौलिमालतीधूलिरञ्जितमतिदुस्तरजगदम्बुनिधिपारम् ॥

स्मरति हररूपं ध्येयम्[2] । स्मरणमङ्गलमखिलनिगमगेयम् ॥

॥ ध्रुवपदमिदम् ॥१॥

सुरनागरनागरीलोकरोचनकपट-गन्ध-गज-बन्धन-कानन-लीलम् ।
बिभ्रदतिशुभ्रतममुरुयुगलकदलिकाकाण्डमुरुताण्डवोद्दण्डशीलम् ॥२॥

त्रिवलिवलयितमुदितमुदस्मनुबिभ्रदतिसुभगगम्भीरतरनाभिकूपम्[3]
अनुपनीतपुण्यलावण्यमयनीरचयनिर्झरप्रसरदावर्त्तरूपम् ॥ ३ ॥

लसितसितभसिताङ्करागरञ्जितमजितकृतचरणपरिचरणमयदारम् ।
स्फुरदुरगयज्ञोपवीतपरित्रातमधिवत्स[4]सौभगभुजगभोगहारम् ॥ ४ ॥

---

1. क. समासमादाश्रम ।
2. ख. हरचरणध्येयं ।
3. ख. नाभिद्रुगं ।
4. क. यशोपवीतमधिवत्स ।

नीलजलधरपटलविजयपटुकण्ठतटरुचिरुचिरकर्पूरपूरगौरम् ।
तपनतनयासलिलमिलदमलजाह्नवीनीरभरविषदतरकान्तगौरम् ॥ ५ ॥

प्रणतदशलोकेशकाम्य[1] सं पदुपहरणविधिधौरेयभावभाजम् ।
कलयदहि[2] वलयफणिमणिकिरणरञ्जितञ्जितपरिघदर्पदशभुजसमाजम् ॥

दधदधरमरुणवरविम्वडम्वरमुदितकुन्दसुन्दररदनवृन्दभासम् ।
वदनमपि मदन[3]मदहारिचलजलददलसदृशदृगनूनतिलसूननासम् ॥ ७ ॥

खण्डमण्डलकुमुदबन्धुबन्धुरमौलि सिन्धुराजन[4]वसनमन्धकारि ।
गाङ्गजलभङ्गसङ्गतजटाजूटतटमनघमान्धातृबन्धहारी ॥ ८ ॥

तपस्यन्तं सान्त्वं गिरिशमरिदोषान्न विदुषा—
मपि क्षेमं काम्यैं सकरुणदृशार्य्यानुचरितम् ।
नमस्यन्नेतस्मिन्व्रतवरिवसितौ चरणयो
भवित्रीं स्वां पुत्रीमतनुत हिमाद्रिः क्षितिधरः[5] ॥ २४ ॥

अनुमन्यते स्म तदभीप्सितं ततो
जगतो हितं गिरिनुतो गिरीशिता ।
स परं निमित्तमभवद्ध्रुवं यतो
भवितव्य एव शिवयोः समागमः ॥ २५ ॥

अरण्यानीमेषा गिरिशपरितोषाय परितो
भ्रमन्ती पुष्पाणांनिचयमवचिन्वत्यनुदिनम्[6] ।
दधौ शम्भो रम्भोरुहकुहरलक्ष्मीहरतनु—
र्मनोनेत्रप्रीतिं धरणिधरराजन्यतनया॥ २६ ॥

तपोभङ्गं विद्वान् स तु सपदि भङ्गं वरतनो—
रसङ्गं मन्वानः परमपुरुषार्थैकपदवीम् ।
गिरीशः पश्यन्त्या गिरिवरभुवो भूतनिवहैः
समं कामं निघ्नन्नहह तत एवान्तरदधात् ॥ २७ ॥

**इति श्रीमदग्निचिन्नित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये [पार्वतीसम्भवो नाम] प्रथमः सर्गः ।**

---

1. ख. दशलोचनशकाम ।
2. क. ककलय ।
3. ख. वदन ।
4. क. ख. सिन्धुराजिन ।
5. ख. पुत्रीमतनुमहिमाद्रिक्षितिधरः ।
6. क. विचन्वत्यनुदिनं ।

## द्वितीयः सर्गः

अथाकस्मादन्तर्दधति दयिते लोचनपथाद्
व्यथामन्तर्गाढ़ां मनसि विनिगूढ़ां धृतवतीम्[1] ।
धराधीशः कन्यां बत विजनवन्यामुवि भवं
स्मरन्तीं सस्नेहां सचकितमपश्यद्दशदिशः ॥१॥

अथ सा विषण्णवदना वनान्तरे
मदनाङ्गनाशनं विना कृताङ्गना ।
भृशमुन्मना[2] धरनरेन्द्रनन्दना
विनिनिन्द दुर्विधिमधीरधीरियम् ॥ २ ॥

### एकादशः प्रबन्धः

( मारुरागेण गीयते )

तव हतदैवानदैवविगीतम् ।
रचितमिदं पदमञ्चितवानसि[3]-पञ्चविशिखमविनीतम् ।

ललितकोकिलपञ्चमविषमपदं रचयति च निकामम्[4] ।
श्रवणपथातिथिरपि[5] यदुपाहृतविरहमरणपरिणामम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

कलयसि कलमधुपावलिझंकृतहुंकृतमपि हृदि कुन्तम् ।
विरहितरुणतरुणीजनविशंसनकारणसहज दुरन्तम् ॥ २ ॥

---

1. धृतवती—इति पाठः ।
2. भृशमुन्मन—इति पाठः ।
3. रचितमिद...तवानसि—पाठः कीटद्रष्टः ।
4. ...कोकिलपञ्चम...चनिका—पाठः कीटद्रष्टः ।
5. श्र...तिथिरपि—पाठः कीटदष्टः ।

पुरहरविजयविजृम्भितपौरुषमनलदवातिकरालम्[1] ।
रचयसि कुसुमचयं खलु दिशि दिशि विषयविशिखशरजालम् ॥ ३ ॥

अबुधविधाय कथं प्रियसङ्गममतिहृदयङ्गमरूपम् ।
नटयसि न चिरमित्यभिमततरविरहितदननुरूपम् ॥ ४ ॥

घटयसि विघटविधुन्तुदचर्वणहतमपि पार्वणचन्द्रम् ।
पुनरपि किमिति तथैव वृथा जनतर्जनपरिहृततन्द्रम् ॥ ५ ॥

कलयसि मलयमहीधरसंचरमारुतमपि वत पापम् ।
विषधरविसरविषानलशवलनजनितनिखिलतनुतापम्[2] ॥ ६ ॥

याति तव कितवजनाननुकूलन एव हि मतिरतिसज्जा ।
उचितं तदिह ममापकृतिं प्रति संप्रति भवति न लज्जा ॥ ७ ॥

इति हरविरहविषादभृशातुरगिरिजावचनमुदितम् ।
जयति रसिकजनरञ्जनविरचनसुकविगदाधरगीतम् ॥ ८ ॥

अद्याहं तमवद्यमेव गणये नारीवधे दुर्विधे
यस्तेऽभूद्व्यवसायसाहसरसः श्रेयो हरः श्रेयसाम् ।
यन्नो लुम्पसि सानुकम्प इव मे जीवातुमेकान्तत-
श्चेतः सङ्गमनङ्गवैरिणि पुनस्तत्ते महत्ते हितम् ॥ ३ ॥

एवं खण्डशशाङ्कमण्डनपरित्यागातिसन्तापिता
सौभाग्यं शरदिन्दुसुन्दरमुखी बन्ध्यं निनिन्दात्मनः ।
पश्यन्ति च मुखानि सा दशदिशां शून्यानि कन्यागिरे—
र्गन्तुं तातनिकेतनं प्रतिमनः साकं सखीभ्यां दधौ ॥ ४ ॥

---

1. पौरुषमनल…कराल—पाठः कीटदष्टः ।

2. भृशातुर…जावचन—पाठः कीटदष्टः ।

अथ तदिदमुदन्तं हन्त विज्ञाय राजा
धरणिधरभटानामात्मजाभीष्टभङ्गम् ।
अधिगिरिवरशृङ्गं तूर्णमागत्य निन्ये
निजसदनमशक्यासङ्गसंकल्पना सा ॥ ५ ॥

अपश्यन्तीमन्तर्गिरिशपरितोषं च पुरतः[1]
सखी निर्णयैनां[2] निपुणमतिराकारकलया ।
अनर्हां मन्वाना कुसुमसुकुमारेण वपुषा
परिश्रान्त्यै मेनामिति बचनमूचे सकरुणम् ॥ ६ ॥

हन्त निशान्तविनिद्रा सन्ततभावनावशादवशा ।
पश्यन्तीव पुरः सा पुरहरमिति भर्तृदारिकालपति ॥ ७ ॥

## द्वादशः प्रबन्धः

( आशावरीरागेण गीयते )

॥ झम्पक तालेन ॥

न कुरु सितिकण्ठ मयि कुण्ठमयमानसम् ।
तव चरणशरणजन उचितकरुणारसम् ॥

देव मम हृदयमेवम्
त्वामुपचरामि चिरसुखादसेवम् ॥

॥ ध्रुवपदमिदम् ॥ १ ॥

सकलहृदि गिरिश यदि संचरसि सन्ततम्[3] ।
किं नु मम कलयसि न शोकनिकरं ततम् ॥ २ ॥

---

1. च...पाठः कीटदष्टः ।
2. निर्णीयैनां—इति पाठः ।
3. कुण्ठमयि मानसं—इति पाठः ।

विदितमित्र कितव तव हृदयमतिनीरसम् ।
मामहह विरहयसि नाथ मदनागसम्[1] ॥ ३ ॥

मनसि न जहामि तव हासनवशोभनम् ।
मुखसकलशीतरुचिमपि नयनलोभनम् ॥ ४ ॥

शिवद तव पदकमलगन्धमनुरुन्धति ।
का न सुखद[2]मभिनन्दति कलावती ॥ ५ ॥

स्मरहरण विस्मरसि किमिदमभिभाषितुम् ।
मयि दयितमसमुचितकरुणमुदासितुम् ॥ ६ ॥

भूतिभूषित वितर सदयनयनाञ्चलम् ।
पञ्चशरविनयकरमङ्ग मयि मङ्गलम् ॥ ७ ॥

इति विरहमोहभरशिखरितनयोदितम् ।
जयति कविमान्धातृगीतं मनसोदितम्[3] ॥ ८ ॥

मनो लग्नं देवि स्मर वजाय[4] खण्डेन्दुमुकुटे
सुतायास्ते मातर्मदवधिर्विधिप्रेरितमिव ।
स्फुरन्तीमप्येतां धरणिधरराजश्रियमियं
ग्रहग्रस्तेवान्तरतदवधि तृणं हन्त मनुते ॥ ८ ॥

भवामि शैलेन्द्र भवामि साम्प्रतं
विना न पुण्येन पिनाकिनः प्रिया ।
क्षितिप्रमूढप्रमितिं करोति सा
तपोवनं यातुमपोहनं श्रियः ॥ ११ ॥

---

1. नाथ पदनागसं—इतिपाठः ।
2. कानमुखद—इतिपाठः ।
3. मनपोदितं—इतिपाठः ।
4. स्मरविजयिनि– इति पाठ; ।

अथानुनीता तपसो निवर्त्तितुं
सुता जनन्यावगतात्मभावया ।
चिरस्थितार्थव्यवसायनिश्चया
निरास्थदप्निभ्रुवविभ्रमेण ताम् ॥ १० ॥

अथ गुरुफलोद्देशावेशात्प्रसादित चेतसः
पितुरनुमतं जानानासौ तपोवनसेवनम् ।
निरगमदहो स्नेहोदग्रं निरस्य निजं निजं
सपदि भवनान्मेनापुत्री सखीसहितोन्मना: ॥ ११ ॥

मुक्ताहारविलेपनाम्बरलसत्कान्तिः कुरङ्गीदृशा--
माश्चर्य्यं च निशान्तगोचरसमुन्मेषश्रियं बिभ्रती ।
एकान्तं धृतभोगभूषणरतिः सौधे परेऽवस्थिता
सा गौरीशिखरे चचार परमं गौरी गरीयस्तपः ॥ १२ ॥

शीर्णं भूरुहपक्वपर्णमपि यन्नाहारमाहारय--
त्तीव्रं चित्तसमाधिमादृतवती खण्डेन्दुचूडामणौ ।
तेनासाव तदुष्करेण महतालोकेऽपर्णेति चे -
त्किं ब्रूमो गमितेति तापसजनैर्दृष्टा तु सा पार्वती ॥ १३ ॥

अथ तपःपरिपाकमुपागतं
धरणिभृद्भुवि भूतचमूपतिः ।
समुपगम्य पुरः समुपस्थितः
स्फुटजटाजिनदण्डधरो वटुः ॥ १४ ॥

सबहुमान पुरःसरमर्च्चित--
स्तुहिनभूधरनन्दनयानया ।
समपनीय पुरः सूचिवानुचि--
तमवदद्वचनं[1] मतिमोहनम् ॥ १५ ॥

1. सूचिवानुचितमदवचनं --इतिपाठः ।

## त्रयोदशः प्रबन्धः

( केदाररागेण गीयते )

॥ कुडुवकतालेन ॥

अयि वरसुन्दरि तव विजनाय वनाय शरीरमुदारम् ।
अभिनवयौवनमुचितमिदं न शिरीषकुसुमसुकुमारम् ॥
बाले मम वचनम् । शृणु हितमतिसारम्[1] ।
दमयसि किं नु तनुं नृपनन्दिनी परिहृतसौधविहारम् ॥ १ ॥

अरुणचरणयुगलं तव हन्त वनेषु कथं मृदुलान्तम् ।
विचरति विकट भसतलकण्टकदन्तुरितेषु नितान्तम् ॥ २ ॥

पृथुतरविम्बनितम्यमनोहर मुक्तरसनकटिदेशम् ।
रूपमिदं तव भवति न शोभनमुज्झितसमुचितवेशम् ॥ ३ ॥

रचयसि कुचकलशं न कृशोदरि कुङ्कुमरसलसदङ्गम् ।
नस्तुलहारलतावलवलायितमनुमतवल्कलसङ्गम् । ४ ॥

किमिदमनञ्जनमपि कृतखञ्जनविनयननयनमलीनम् ।
मनसिजविजयशरं खलु वहसि निवातकमलसमशीलम् ॥ ५ ॥

कुसुमचयेन कुटिलकचैसंचयमञ्चसि सुतनु नकामम् ।
अहह मुनेरिव सुमुखि तपस्तव जनयति विषयविरामम् ॥ ६ ॥

भवदसुलसमधिकं वरवर्णिनि किं वरमवकलयन्ती ।
दुश्चरपरमतपः प्रति संप्रति भवसि मनो वलयन्ती ॥ ७ ॥

इतिकृतचाटुवाचाटवटुभाषितमनुगिरिसुतमुपनीतम् ।
रसयतु रसिकजनेषु मनोहरसुकविगदाधरगीतम् ॥ ८ ॥

---

1. शृणु...म...सारं—पाठः कीटदष्टः ।

इति ब्रुवाणं नगराजनन्दना
त्रपासखी साथ सखीमुखेन तम् ।
निबोधयामास निजं मनोरथं
शशाङ्कचूडाङ्कतलाधिरोहणे ॥ १६ ॥

श्रुत्वा वाचं सवाचंयमहिमगिरिजासम्मुखीनां सखीतः
शम्भौ सम्भावनीया न बुधजनदृशा प्राह दोषानशेषान् ।
तासां वाचाटवाचामथ कुपथजुषामक्षमापास्य मौनं
तत्रोमा[1] वस्तुतस्तान् गुणभुवि वितथानन्यथा व्याचचक्षे ॥ १७ ॥

निनिद्विषन्तं पुनरोष्ठचेष्टया
निरूप्य सा वेल्लितचिल्लिवल्लरी ।
निवारयामास वटुं कदूक्तिभिः
स्वधर्ममर्मविधमायतेक्षणा ॥ १८ ॥

प्रतिप्रतिक्षेपवचः श्रुतिक्षमं
कथं श्रुतीयामिति चिन्तया ततः ।
जवादुदस्थादनवस्थिते[2] हिता
रुषाथ सा गन्तुमना वनान्तरम् ॥ १६ ॥

अथ शशिखण्डमण्डनमनङ्गसहस्रमद—
प्रशमदकान्तरूपमतिशान्तमनः सुलभम् ।
प्रतनमदर्शयन्निजवपुर्वृषकेतुरुमामिति
प्रहसन्नुवाच बहुतत्तपसा विजितः ॥ २० ॥

वितन्वाना तन्वि त्वमिह परमं यन्मम कृते
तपो योगं भोगं सदनसुलभं विस्मृतवती ।
शरीरार्द्धं तत्ते प्रणयिनि ददानीति गदिता
परां कोटीं प्रीतेरगमदगराजन्यतनया ॥ २१ ॥

---

१. ततोमा—इतिपाठः ।

२. जवादुदस्थाननवस्थिते—इति पाठः ।

अथ पुरहरः पित्रा दत्तां[1] यथाविधि तां सुता—
मनुहुतवहं पाणौ कर्त्तुं यदोद्यमनागतः।
व्यदधत ततः पुष्पसारैस्तदैव सुमङ्गलं
स्नपनमनयोः सर्वाङ्गीणं सुरेन्द्रवनाश्रनाः॥ २२॥

आव्यामा वृषभध्वजेन तदनु प्रीतात्मना सा स्वसा
मैनाकस्य मनागनुन्मुखमना विश्लेषतः प्रेयसः।
याने नाथ[2] हिरण्मयेन नगरीं प्रत्यागता भूभृतो
राजश्रीरिव नागरीपरिषदां नेत्राम्बुजैः पूरिता॥ २३॥

इति श्रीमदग्निचिनित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये गौरीतपःपरिपाको नाम द्वितीयः सर्गः।

---

1. पितृदत्तां—इति पाठः।

2. ...नेनाथ—पाठः कीटदष्टः।

## तृतीयः सर्गः

अथ स्वतातय नगेन्द्रनन्दना
सखीगिरा चन्द्रमुखी यथातथम् ।
निवेदयामास पिनाकिनः पुन—
र्मुखप्रसादोदितमप्यनुग्रहम् ॥ १ ॥

तन्तादृग्भाग्यभोग्यं त्रिनयनमवयन् सानुमानात्मजाया
जामात्वे तस्य वेदोदितविधिविधिना कल्पयिष्यंस्ततस्ताम्
रत्नालङ्कारनूत्नाम्बरवरसजनारम्भसम्भ्रान्तलोलं
सम्भारं संबभार क्षितिधरनृपतिः कल्पनाकल्पवृत्तिः ॥ २ ॥

अथ स्फुटं चन्द्रकिरीटचोदिताः
समागताः सप्तमुनीश्वरा दिव ।
दिनत्रयानन्तरमब्रुवन् ध्रुवं
गिरीशवैवाहिकवासरं गिरिम् ॥ ३ ॥

ततः सरम्भातरुचारुचत्वरां[2]
सुसिक्तसंमार्जितराजसंचराम् ।
चलत्पताकावलिचारुतोरणां
पुरीमलङ्कारयति स्म भूधरः ॥ ४ ॥

अथ निजतनयां तां हन्त पूर्वेद्युरेव
श्रुतिविहितहरिद्राश्लिष्टगन्धाधिवासम् ।
परिणयनदिनादौ तुङ्गमाङ्गल्यघोषैः
सह कुलयुवतीभिः स्नापयामास मेना ॥ ५ ॥

---

1. चि...नृप...पाठः कीटदष्टः ।
2. रम्भा...चारुचत्वरं —इति पाठः ।

अथ शिरसिभुजिष्यासंहृताकल्पानकुम्भा-
त्स्नपनसलिलकुम्भादम्बुधारा पतन्ती।
कनकशिखरशृङ्गाद्व्योमगङ्गाधरित्री—
मिव गिरिवरपुत्रीं भूषयामास भूयः॥ ६॥

विचित्रचीनांशुकसंभृतश्रियं
प्रसाधयिष्यन्नथ तां सखीजनः।
जवादहंपूर्विकया समापतत्
प्रतप्तचामीकरचारुमूर्तिविग्रहां॥ ७॥

## चतुर्दशः प्रबन्धः

(कामोदीरागेण गीयते)

तरुण-सरोज-सपत्नम् । काचिदरुण-नखरत्नम्।
चरणमरस्त्वयदपि विफलंकृतपावकविरचनयत्नम्।

॥ ध्रुवपदमिदम्॥

काचन पदमिदमीयम् । सुरभिकमलकमनीयम्।
समुचितमेव सहंसकमकुरुत भुवनत्रयमननीयम्।
काचन नवमुपनीतम् । काञ्चन-रोचिरुदीतम्।
अतनुत मणिरसनागुणमधिगुणमनुकटितटपरिनीतम्॥ ३॥

कापि विमलतरतारम् । प्रणयि सखीवरहारम्।
अनुकुचकनकधरं समघटयत चर्च्चितमृगमदसारम्॥ ४॥

कापि विहितबहुवेशा । परिचितविविधविशेषा।
ललिततरत्रिकंकण्ठरुचिसविस्मयरहितनिमेषा॥ ५॥

---

1. ललिततरत्रिक—इति पाठः।

कापि कृतस्मितलेशम् । भूषणगणविनिवेशम् ।
रचितवती चतुरा परिकर्मणि नवसखमुपवेशम् ॥ ६ ॥

कुङ्कुमतिलकितभालम् । कुसुमितकुन्तलबालम् ।
विदधे कापि शिरोमणिमण्डनमनवधिकान्तिविशालम् ॥ ७ ॥

सुकविगदाधरगीतम् । श्रवणचुलुकपरिणीतम् ।
मधुरममृतमिव सुखयतु सज्जनवदनसुधांशुनिरीतम् । ८ ॥

इतीयमाबद्धविभूषणाम्बर –
स्रगङ्गरागस्फुरदङ्गसंहितः ।
अधारयन्कामपि कान्तिसम्पदं
त्रिनेत्रचित्तभ्रमदायिविभ्रमा ॥ ९ ॥

व्यज्ञापयन विज्ञाः शम्भुं सप्तऋषयः समुपागम्य ।
अद्य विभो समयस्ते हैमवतीपाणिपीडनायेति ॥ १० ॥

अथ विवाहमहोत्सवमण्डनं
प्रकृतिखण्डितदर्पकदर्पकः ।
अधितलोकमनोनयनोत्सवं
समधिकं समनोरथमात्रतः ॥ ११ ॥

ब्रह्मेन्द्रोपेन्द्रवैवस्वतवरुणमरुद्राजराजप्रधानै–
र्देवैः सेवैकतानैरुपचित परमानन्दनन्दीयमानः ।
गान्धारग्राममार्गाश्रितललितपदामन्दसन्दर्भगर्भं
गन्धर्वैर्गीयमानो नगवरनगरीं प्राविशच्चन्द्रचूडः । १२ ॥

---

1. दैवैः...कतानैरुपचित—पाठःकीटदष्टः ।

श्रेणीभिश्चामराणां सुरयुवतिकराम्भोरुहोत्सङ्गरङ्गे
नृत्यन्तीभिः समन्तान्मणिवलयरणत्क्वाणतालानुरूपम् ।
भ्राजन्तं राजमार्गे नगनृपनगरीनागरीणां गिरीशं
लोलापाङ्गोत्तरङ्गैर्नयनकुवलयैरर्चितुं संभ्रमोऽभूत् ॥१३॥

## पञ्चदशः प्रबन्धः

( वसन्तरागेण गीयते )

॥ पडितालेन ॥

एकचरणधृतयावकरागा । चन्द्रमुकुटमनुलसदनुरागा ॥
काचन भवमधिकम् । अतनुन लोचनपथपथिकम् ॥
॥ ध्रुवपदमिदम् ॥१॥

एकपदाहितनूपुरवलया । कलिता मसि कुतूहलकलया ॥२॥

अपि वपुरपगतचीन-निचोला । पुरहर-वदन-विलोकनलोला ॥३॥

विगलितगलितघनस्तनहारा । परमचमत्कृतिचञ्चलतारा ॥४॥

एकनयनजयदञ्जनलेखा । सामिरचितकुचचन्दनवेशा ॥५॥

विस्मृतसहजमदालसगमना । अवमानितनिजगुरुजनवदना ॥६॥

विपुलनितम्बभरं बहमाना । अनुपदमपटुपदानि ददाना ॥७॥

सरसमसृणपदसम्पदुदीतम् । जयति गदाधरकविवरगीतम् ॥८॥

साम्प्रतं धरनगेन्द्रनन्दना यत्तपः परममप्यतप्यत ।
अन्यथा कथमिमं मनस्विनी कान्तमेवमतिकान्तमेतु सा ॥१४॥

वाचमित्थमवयन् प्रियङ्करीं
पौरपङ्कजमुखीप्रचारिताम्[1] ॥
आचरत्परमनुग्रहं दृशा
तादृशा शिशुशशाङ्कशेखरः ॥१५॥

ततः स्वनत्तूर्यमृदङ्गमङ्गलैः
शुभैरुलूलुध्वनिभिर्मृगीदृशाम् ।
पुरूसमासन्नषडर्घ्यसत्क्रियो
विवेश वैवाहिकमण्डपं विभुः ॥१६॥

ब्रह्मर्षिसम्मतपथेन यथाविधानं[2]
वैवाहिकं विधिमुपक्रममाण एव ।
स्नातां नवाम्बरविभूषणभूषिताङ्गीं
हस्ते चकार धरराजसुतां स तावत् ॥१७॥

कम्बुना वितरणाम्बुसंभृतं
वेपथुश्लथकराम्बुजच्युतम् ।
स्वेदपूरपरिपूरणात्क्षणा –
त्संदधे पुनरलक्षितं हरः ॥१८॥

वेदोदितेन विधिनाथ भवो भवान्या
माङ्गल्य[3]तन्तुमधिकण्ठतटं बबन्ध ।
शम्भोरलंभवति यत्प्रभवानुभावा–
त्पीतोऽपि कालकलनाय न कालकूटः ॥१९॥

---

1. पङ्कजमुखी···तां—पाठः कीटदष्टः ।
2. य···पाठः कीटदष्टः ।
3 मङ्गल—इति पाठः ।

ततस्तु तौ कामसमृद्धिकामुकौ
वधूवरौ स्मेरमुखौ पुनः पुनः ।
किरीटकोटीतटघट्टिताङ्घ्रि लिं
व्यतिक्षिपेते स्म शुभाक्षताञ्जलिम् ॥२०॥

समस्करोन्मन्थनजं धनञ्जयं
स्वमेव रूपं स तदा सदाशिवः ।
जुहाव तस्मिन्विधिवोधिताध्वना
हविः पवित्रं सकलागमार्थवित् ॥२१॥

रराज लाजाञ्जलिहोमधूमतो
दृशोर्द्वयी कोकनदायितायता ।
चिरानुरागं किममान्तमन्तरे[1]
स्फुटं वमन्ती सुतनोरनुप्रियम् ॥२२॥

अथ समाप्तविवाहमहोदयं
सदृशरूपवधूवरयोर्द्वयम् ।
अभिननन्द सरोरुहनन्दनः
सहसुरैश्च ननाम सनन्दनः ॥२३॥

## षोडशः प्रबन्धः

( मह्लाररागेण गीयते )

मनसिजगञ्जन भवभयभञ्जन मोहतमोऽपहभरण हरे ।
जगदनुरञ्जन चरितनिरञ्जन दुरितमतङ्गजसमज हरे ॥
जय जय भव भवनाधिपते ।
पालय परमकृपालय शङ्कर दनुजभयङ्कर मनुजगते ॥
॥ ध्रुवपदमिदम् ॥१॥

---

1. किममान्त ... पाठः कीटदष्टः ।

भसितविभूषण विरहितदूषण तनुजितशारदरजनीपते ।
सहृदयतोषण सज्जनपोषण सुन्दरकुन्दरदनविततें ॥२॥

खलजनदण्डन शशधरमण्डन हारलतायितभुजगपते ।
मखविधिखण्डन निटिलगचण्डनयननिजजनहितनिहितमते ॥३॥

सनकसनन्दनविरचितवन्दनराजतधराधरकृतवसते ।
त्रिभुवननन्दनमतहरिचन्दन सुकविगदाधरगीतरते ॥४॥

## सप्तदशः प्रबन्धः

( मालवश्रीरागेण गीयते )

सारससारसहोदरनेत्रे तनुलतिकानवपल्लवनेत्रे ।
काञ्चनचंपकचंपककान्ते कामरिपोरपि लोचनकान्ते ।

पालय शैलपुरन्दरनन्दिनी शङ्करभाविनी दीनम् ।
मामिह तावकभावविहीनम् ॥
कुन्दकदम्बकसुन्दरहासे
अधरविडम्बितविम्बविलासे ॥
॥ ध्रुवपदमिदम् ॥१॥

कुण्डलमण्डितचारुकपोले । शम्भुमुखाम्बुजलोचनलोले ॥२॥
चन्दनचन्द्रविलेपनसान्द्रे । सकलकलाननशारदचन्द्रे ॥३॥
सूनचयाञ्चितकुञ्चितकेशे । कुङ्कुमपङ्कविशेषकवेशे ॥४॥
हारलतालिपयोधरकुम्भे । ऊरुपराजितकाञ्चनरम्भे ॥५॥
सारसनछविचुम्बितनितम्बे । शिञ्जितकिङ्किणिकानिकुरुम्बे ॥६॥
नूपुरपूरितपादसरोजे । जीवितवीतशरीरमनोजे ॥७॥
मञ्जुमणिगणभूषणचित्रे । धीरगदाधरगीतचरित्रे ॥८॥

सैव दैवतपुङ्गवेन विधिना नानाननैर्वर्णितः
साकं नाकनिकायनायकमुखैर्लेखैरुमावल्लभः ।
प्रीतः शीतमयूखमण्डलमुखः पीयूषधारामयीं
वाणीमात्मभुवे कृतस्मितमिमां प्रोवाच वाचं प्रभुः ॥२३॥

न विधे विधेहि विबुधेन्द्रकृते
व्यवसायसाहसिकतां मनसि ।
न चिरमपश्यत्सचिवो[1] भवतां
भविता हि तारकनिकारहरः ॥२५॥

उपवीणयन्ति ये मामुमामध्यनेन गीतेन ।
भवता गीतेन न ते भवतापभयं प्रपद्यन्ते ॥२६॥

इत्थं संप्राप्तचेताऽभिलषितफलकानुग्रहोदग्रहर्षा-
द्वर्षीयांस पुमांसं तमवितथगिर साधुशीर्ष्णा प्रणम्य ।
आमन्त्र्यामन्त्र्य देवा धरणिधरपतेरुन्नतं भागधेयं
शंसन्तोऽस्याः समीपे निजनिजनिलयान् प्राविशन् सुप्रसन्नाः ॥२७॥

इति श्रीमदग्निचिन्नित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये
[शिवविवाहो][2] नाम तृतीयः सर्ग ।

---

1. न चिरसपश्यसचिवो—इति पाठः ।
2. Omitted in the Ms.

## चतुर्थः सर्गः

अथ स्वसंकल्पसुरेन्द्रशिल्पिना
पिनाकिना कल्पितसौधसद्मना ।
सुखं समृद्धात्मपरिच्छदश्रिया
धराधराजात्मजयाऽन्वभूयत ॥१॥

विधुन्वाना नानाकरकिशलयं कोपनपरा[1]-
निषेधन्ती[1] कान्तं दृढतनुपरीरम्भरभसम् ।
दधत्यन्तःसन्तोषणमपि मनोजन्मवशगा
नवोढा वोढारं तमरमयतैव प्रियतमा ॥२॥

### अष्टादशः प्रबन्धः

( कामोदीरागेण गीयते )

सहजसलज्जतयाकुलिता वलकलितललितवसनान्तम् ।
नियमितमञ्जुवचनरचना चिरलोलुपमत्र नितान्तम् ॥

बाला साऽरमयत निजकान्तम् ।
तदनुकूलनशीलपरापि तमनुदिनं[2] नूतनकान्तम् ॥

॥ ध्रुवपदमिदम् ॥१॥

अभिमतनायकस्य[3] सङ्गसुखापि करेण कलं कलयन्तम् ।
अभिनवं दधती मधुरं न-न-नेति कृतापि समिव निवसन्तम् ॥२॥

अतिसङ्कुचिततनुलतिकाहितदृढपरिरम्भणलोभम् ।
रतिरुचिदम्भदलनसुषमातनुजितशतमन्मथशोभम् ॥३॥

---

1. कोप···पाठः कीटदष्टः ।

2. मनु···पाठः कीटदष्टः ।

3. अभिमतनायतस्य इति पाठः ।

अन्यत इव नयने वदति निजवदनावलोकनलोलम् ।
अथ कथमपि दयितं प्रति सम्प्रति तदतीवदर्शनशीलम्[1] ॥४॥

अवनामिक दधती खण्डमण्डलमनुसखि किकिसपिवन्नम् ।
अवधुवती शिर ईरय सुन्दरि गिरमिति बहुनिशदन्तम् ॥५॥

सा हसितमुखी निभृतं हसनाय विभावितविविधविकारम् ।
निगदति तदलक्षितमनुसखि किमपि दरस्मितसारम् ॥६॥

चपलितचिल्लीलतापरिहासवचनचयधीरम् ।
मदननगमपथं सा गमिता कथमपि रतिभाववरम्[2] ॥७॥

इति वरनवरमणीगुणवर्णनमुचितपदैरुपनीतम् ।
रसिकमुदं वितनोतु मनोहरसुकविगदाधरगीतम् । ८॥

इत्थं हैमवतीमतीवविलसच्छालीनभावाद्भवो
रम्भोरुं वशमानिनाय शनकैः सम्भोगलेशेन ताम् ।
शक्यं छन्दयितुं हठात्स्मरगणाविद्येव गूढाशया
यादर्थ्येन नियूयतेऽक्षपटुभिर्दाक्षिण्यमन्दादिशम् ॥३॥

लावण्यामृतसिन्धुमिन्दुरुचिरस्मेरानना सा हस—
ल्लीलापाङ्गतरङ्गितेन नयनाम्भोजेन शम्भोर्मनः ।
विक्रीणीत निजेन सा धरभुवो यत्प्रेमहेमान्वयि[3]
प्रादावर्द्धत तत्र नून[4] मनपूमात्यन्तसन्तोषितः ॥४॥

दुग्धं संमुग्धभावादिव किमपि पुरारातिनास्मै प्रदत्तं
तन्नामृष्यत्किमस्य त्रिभुवनविजयोत्तम्भिताखर्वगर्वः ।
गौरीनेत्रैर्निजास्त्रैस्त्रिभुवनमजयः काम एवैतदीयान्
लीलाधर्मार्थमोक्षान्यदधिहृदि नरीनृत्यति स्म स्मरारेः ॥५॥

---

1. तदतीददर्शनशीलमिति पाठः ।
2. रतिभाव···पाठः कीटदष्ट ।
3. साधरभुवोत्प्रेमहेमाचि—इति पाठः ।
4. प्रादावर्द्धन्ननूनमिति पाठः ।

कालेनाथ गरीयसा विलसितं गङ्गाधरानुग्रहं[1]
क्षोणीशक्षयधूमकेतुममरश्रेणीसमावीक्षितम् ।
सौभाग्यप्रदमौषधं किमपि तल्लोकत्रयी[2]सुभ्रुवा
गर्भे पर्वतसार्वभौमतनया धत्ते स्म तेजस्विनम् ॥६॥

मध्यं पुरापत्तनुमध्यमायाः
मुहुर्मुहुर्भङ्गभयास्पदत्वम्[3] ।
अपालपष्ठ परमासि मादा-
समाक्रमं किं वलिभिः क्षमेत ॥७॥

रम्भोरूकुचकुम्भ एव हृतवान्मध्यस्य पुष्टिं परां
सद्वृत्तो बहिरन्तरेष कठिनः पूर्वं तिरस्कृत्य यः ।
मध्यं संप्रति संपदं परमिकां संप्राप्य सर्वाधिकां
प्रागल्भ्येन मुखं कथं प्रचयतास्येतस्य न श्यामिकाम् ॥८॥

अनूनगर्भातिभरालसेक्षणद्वयीसमुत्सारितचारुविभ्रमम् ।
तदीयमापाग्रिमतारमाननं न पुण्डरीकादधिकं व्यकाशत ॥९॥

स्वभावलावण्यवती तदा सती परां दधे पञ्चसु भूषणैः श्रियम् ।
समुल्लसद्गर्भभरालसा हि सा यथा विधुः पञ्चभिरुज्ज्वलग्रहैः ॥१०॥

एवं निर्भरनिःसहाङ्गलतिकागर्भातिभारेण सा
तन्वङ्गी दयितस्य चेतसि मुदं पुत्रीयतस्तन्वती ।
पुत्रं कंचिदसूत नाकनगरीसामन्तसीमन्तिनी
जीर्यन्मङ्गलतन्तुसन्तत ? पुनः सन्धानुसन्धव्रतम् ॥११॥

---

1. गरीयसा—पाठो नास्ति ।
2. कि···ल्लो—पाठः कीटदष्टः
3. मध्यमायाः···भयास्पदत्वं—पाठः कीटदष्टः ।

अवतरत्यथ मन्मथवैरिणस्तनुजनौ ववृषुः कुसुमं सुराः ।
प्रववृते दिवि दुन्दुभिनिस्वनः सुरभिगन्धिरुवाह समीरणः ॥१२॥

गन्धर्वविद्याधरचारणानां तदोपगायन्ति गणाः प्रवीणाः
गर्वाय गीर्वाणचमूभटानामनन्यसामान्यमुदितमेतम् ॥१३॥

## ऊनविंशः प्रबन्धः

( भैरवरागेण गीयते )

जय जय खण्डरजनीकरमण्डननन्दनसुरगणबन्धो ।
अगणितपरमपराक्रमपौरुषकृपणकृपारससिन्धो ॥

दैवतहितकरणधुरीणभवन्तम् ।
शरणमया मत्तया कुर्वता वयमनुपमविभ्रमवन्तम् ॥

॥ ध्रुवपदमिदम् ॥१॥

काञ्चनसञ्चयरुचिरुचिरसन्तानसरसिजषण्डम् ।
कुण्डलमुकुटकटकरसनाङ्गदभूषितमुरुभुजदण्डम् ॥२॥

॥ देढ़ीपडिताल ॥

अमरचमूपनिसमरविमूढा पालय भवसुतं भवति ।
लोकय करुणादृशा, लोकमिमं नवकुवलयसदृशा ॥३॥

नमुचिसूदनममुचितलक्ष्मीं, प्रत्याहर परिहर तदलक्ष्मीम् ।
इति सुरगायनपरिषदुदीतं, जयति गदाधरकविवरगीतम् ॥४॥

ततः स भूतेशसुतः[1] स्वभावतः पितुर्महानुग्रहवैभवादपि ।
बभार शक्तिविनयं दुरासदो जिगाय येनासुरवीरतारकम् ॥१४॥

इति काचिदुमासखी[2] समागमयित्वा शशिखण्डमण्डनः ।
निरियाय हिमालयालयाद्विहरिष्यन्नवनीवनीरनु ॥१५॥

तत्रासौ वरसद्मसौधनिवहैरभ्रंलिहां काञ्चन-
प्राकाराञ्चितचारुतोरणवतीमुत्फुल्लपद्माकराम् ।
पुष्यत्कल्पमहीलतादिललितां नानोपहारोचितां
संकल्पोपनतां पुरीं परपुपानध्यास्त कान्तासखः ॥१६॥

अथ कदाचन काञ्चनसम्पद
समवलोकयितुं प्रमथैः सह ।
अपगते दयिते नगनन्दना
तनुविलेपनमैहत कुङ्कुमैः ॥१७॥

विलेपनोच्छेषणकुङ्कुमेन सा
विधाय वीरप्रतिमां महेश्वरी ।
नियुज्य चैनां प्रतिहारपालने
विवेश हृष्टा निजमज्जनालयम् ॥१८॥

अथ भूतपतिमुपागतं वनाद्-
भवनाय नायमवयन्नुमा प्रियम् ।
निषिषेध यातुमिमन्तकप्रभ-
प्रतिमं हिमांशुजटं महोत्कटम्[3] ॥१९॥

---

1. 'महेशस्य सुतः' इत्यधिकलेखोऽस्ति ।
2. काश्चिदुमासखः इति पाठः ।
3. हिमांशुमहोत्कटमिति पाठः ।

रुन्धानस्य पथं तथान्धकरिपुर्निर्बन्धमभ्याक्षिप-
द्धारालेन[1] परश्वधेन विदधे तत्कन्धरच्छेदनम् ।
विज्ञायाथ वसुन्धराधरसुता पुत्रीकृतं तं पुन-
र्जीवन्तं वरगन्धसिन्धुरशिरः सन्धाय तूर्णं व्यधात् ॥२०॥

इदममङ्गलमङ्गजशासनः
स न शशाक समक्षमपेक्षितुम् ।
धरनरेन्द्रसुतासहितस्ततो
रजतपर्वतपत्तनमाययौ ॥२१॥

दृष्ट्वाऽदृष्टचरीं गिरीशनगरीमभ्येत्य तां स्फाटिक-
प्राकारालयगोपुरोपवनिकावापीभिरापीवराम् ।
हैमै रत्नचितैर्निकेतनशतैराकीर्णरथ्यापणा-
मेणाङ्काभरणप्रिया प्रतिपदं सन्तोषमन्तर्दधौ ॥२२॥

अथ तत्र विचित्रकामभोगै-
र्भगवान् भूमिधरात्मजासहायः ।
मुमुदे कुमुदेन्दुनन्दनश्री
स्त्रिजगन्नन्दननन्दनद्रुयेन ॥२३॥

सैनापत्येऽपत्यमपेत्य प्रियमग्र्यं
धात्रा क्लृप्तसर्वसुपर्वाधिपतीनाम् ।
चक्रे पुत्रं तत्र यविष्ठं युवराजं
गौरीप्रेयानासुरीकृत्य धुरीणम् ॥२४॥

प्रमथास्तमथारूढं गणैनाथपदं मुदं परामन्तः ।
तं प्रतिहन्त बहन्तः साम्प्रतमन्तः स्तुवन्ति स्म ॥२५॥

---

1. 'धारवता' इत्यधिकलेखोऽस्ति ।

## विंशः प्रबन्धः

( गुण्डकिरीरागेण[1] गीयते )

॥ झम्पकतालेन ॥

चरणनतश्लोककृतशोकनाशम् । पूजनप्रवणजनपूरिताशम् ॥
॥ ध्रुवपदमिदम् ॥१॥

शरणमुपयामबहुकामभोगम् । गणशमनीतभवभीतिभोगम् ॥२॥

किङ्किणीरणितकाञ्चिसारम् । पीतपटबीतकटितटमुदारम् ॥३॥

प्रणतिमतिनिघ्नमतिविघ्नराजम् । पृथुलपरतुन्दपरभागभाजम् ॥४॥

चण्डवेतण्डमुखचपलकर्णम् । सौवर्णधरणीधररुचिरवर्णम् ॥५॥

गण्डमण्डलचलितमधुपमालम् । नगनृपतिनन्दिनीचरमबालम् ॥६॥

उरसि धृतनूत्नतररत्नहारम् । अमलमणिकेयूरवलयतारम् ॥७॥

मोदकामोदभरतलशुण्डम् । अलिकदृशमलकलसदिन्दुखण्डम् ॥८॥

कर्णचामरमधुरमेकदन्तम् । कविवरगदाधरप्रणयवन्तम् ॥९॥

तनुजं सैनापत्ये तदवरजं गाणपत्ये सा ।
अधिकृतमधिगच्छन्ती गौरी लेभे परं परितोषम् ॥२६॥

अथ गिरिनगरीस्थं सुस्थिता शैलपुत्री
निजतनुजवराभ्यामभ्युदीता नितान्तम् ।
गिरिशमुपनमन्ती साधुमाम्राज्यलक्ष्मी-
रिव त्रिनयनयाभ्यां सार्वभौम वभौ सा ॥२७॥

इति श्रीमदग्निचिन्निन्यानन्दपण्डितविरचिते शिवलीलामृते महाकाव्ये संपन्ननन्दनानन्दनो नाम चतुर्थः सर्गः ।

---

1. गुण्डरीरागेण—इति पाठः ।

## पञ्चमः सर्गः

एकदा किल सदाशिवप्रिया
प्राभवेन[1] दयितस्य कल्पिताम् ।
कल्पभूरुहवनीमनीनय-
त्सौभगं चरणचारुविभ्रमैः ॥१॥

तत्र चित्तहृतिकोकिलारुतै-
र्मारुतैः कमलगन्धिचारुभिः ।
नित्यनूतनससूनपल्लवै[2]-
र्वल्लभेन विजहार पार्वती ॥२॥

तं विलोक्य विहरन्तमन्तिके
केलती रमणरामणीयकम् ।
चन्द्रखण्डमुकुट जया सखी
हन्त कामपि बभार भावनाम् ॥३॥

### एकविंशः प्रबन्धः

( गुण्डकेरीरागेण गीयते )

हरमुखशशधरविम्बवशम्वदसम्मुखनयनचकोरा ।
परिहृततदितरविषयरसादरविस्मृतनिज[3]परिचारा ॥
सा तदा सविकारा ।
स्थगितसरोजदलायतलोचननिर्भरमन्थरतारा ।
॥ ध्रुवपदमिदम् ॥१॥

---

1. प्राभवेण इति पाठः ।
2. कमलगन्धि···पाठः कीटदष्टः ।
3. निज इति पाठो नास्ति ।

पृथुलपयोधरकुम्भभरादिव कम्पितललितनितम्बा ।
अभिमतदुर्लभगर्हिततापविधूसरिताधरविम्बा ॥२॥

अनुभवति स्म सकलतनुसङ्गतमपि के जडिमानम् ।
प्रणयिसखीपरिहासकथासु तथा न वदति बहुमानम् ॥३॥

स्वेदसलिलकलयाकुलिताखिलतनुतनुचीननिचोला ।
प्रकटघनस्तनकुम्भनितम्बभराहरविहरणलोला ॥४॥

अविरलपुलककदम्बककरम्बितकोमलसकलशरीरा ।
शिथिलितकुचतटकञ्चुलिकाकुसुमाशुगभावगभीरा ॥५॥

असकलविषदपदं कथमपि ब्रुवती पदनन्दितरूपम् ।
कियदपि भीतिसरिति विनिमज्जति सज्जति चाननुरूपम् ॥६॥

झलझलदम्बुपटलचितलोचनदोषवशेन नितान्तम् ।
अन्तिकगतमपि हन्त न पश्यति झटिति कदाचन कान्तम् ॥७॥

इति वृषकेतननूतनरागभरागतविविधविकारम् ।
जयति जयाललितं भुवि सुकविगदाधरभणितमुदारम् ॥८॥

एवं शङ्करकेलिलालसमनाः साशङ्कमाना भृशं
पार्वत्या दयिता सखि न किमपि प्रापद्यत प्रेयसी ।
गौरीगौरवयन्त्रणापरवशः सर्वान्तरात्मा पुनः
जानन्नेव जयामनोऽभिलषितं तूष्णीं बभूव प्रभुः ॥४॥

तदुपलभ्य धरेन्द्रसुताथ तां
सपदि कोकनदारुणलोचना ।
अशपदाविशमानुषभूमिकां
द्रुतमितोऽनुचिताचरणादिति ॥५॥

सा किल गौरीशापादजनि हरिश्चन्द्रभूपतेः पत्नी ।
मेने हैमवतीति रहसि तृतीयेक्षणेन क्षणान्तेन ॥६॥

चन्द्रचन्दनवराम्बरादिभिस्तामसौ विमलसौधसद्मनि ।
देवतामिव परां नराधिपः पर्यचारयत किङ्करीजनैः ॥७॥

गिरिशानुग्रहलेशादलभत जातिस्मरत्वमप्येषा[1] ।
काङ्क्षन्ती शशिमौलेः सङ्गमसुखमङ्गलानि सत्यवती ॥८॥

एकदा नगनरेन्द्रकन्यया
का तवास्ति नगरी भुवि प्रभो ।
देव देव निगदेति नोदितो
जित्वरीं हर उदाहरत्पुरीम् ॥९॥

मर्य्यादां चलुकोच्चुलाम्बत[2] नदीबन्धोर्मुनेर्मानय-
न्विन्ध्यो नाम धराधरो विजयते वन्ध्योद्यमः संप्रति ।
तुङ्गैः शृङ्गशतैः समुन्नतिमदं यो बिभ्रदभ्रङ्कषै-
र्हेमक्ष्माभृत उध्ध्वर्मानमधरीकर्त्तुं प्रवृत्तः पुरा ॥१०॥

तमुत्तरेणाचलनाथनन्दने[3]
प्रतीतमानन्दवनाभिधानतः ।
मनोरम नोऽस्ति समस्तपावनं
वनं महीमण्डलमध्यमण्डनम्[4] ॥११॥

यस्यामम्बुजषण्डमण्डितजला गङ्गार्थाच गाहते
या चाभ्रंलिहशुभ्रसौधनिवहैर्निन्ये दिवं नीचताम् ।
सौवर्गानपि शेरते तनुभृतां भोगाभुवो यद्भुवः
सा काशी नगराजपुत्रि नगरी तस्मिन्वरीवर्त्तिनः ॥१२॥

---

1. जतिस···त्व···म···पाठः कीटदष्टः ।
2. चलुकोंच्चुल···त—पाठः कीठदष्टः ।
3. नायन···पाठः कीटदष्टः ।
4. महीमद्धहलममनं—इति पाठः ।

यस्यामाशिशुमाशिशुमारचक्रभुवनं तुङ्गं परं गोपुरं
नूनं गन्तुमुपर्युपर्यनुदिनं योग्यामुपास्ते बहिः[1] ।
योऽसावुत्तरदक्षिणायनमिषादद्यापि पार्श्वद्वये
यातायातपरिश्रमं वितनुते भूयांसमेकग्रहः ॥१३॥

यस्यामुन्नतनर्महर्म्यधरणीसंचारणीनां वर-
स्त्रीणामाननमण्डलैरनुभवन् गोष्ठीसुखे सौष्ठवम् ।
दत्तं प्रागपि नागवल्लीकवलं प्रत्याहरद्भिः प्रियैः
कृच्छ्रेणाङ्कगताङ्कपङ्कक्लना वेणीं क उन्नीयते ॥१४॥

पश्यामः कणभक्षपक्षनिपुणा नक्षाङ्घ्रिवाग्विस्तर-
प्रख्यातप्रतिभानपौरुषयुषः सांख्यातिसख्य वतः ।
यस्यां पन्नगभाष्यतत्त्वविदुषः पाताञ्जलप्राञ्जल-
प्रज्ञान् जैमिनिबादरायणमतप्रज्ञान् धरानिर्जरान् ॥१५॥

कः श्रेयसे न नियुनक्ति धनं जनोऽस्यां
निःश्रेयसे निधनमप्युचितप्रवीणः ।
आशास्यते सखि सुखायति मित्रवासं[2]
दुःखान्तनाकनगरीनिलयाधिवासाः ॥१६॥

विधानमुच्चैःश्रवसां सुधामयं
समृद्धसन्तानचयं गृहेगृहे ।
दूरं तदेतन्न कथं सुतन्वि भो
प्रभूतरत्नाकरतां प्रपद्यताम् ॥१७॥

---

1. योग्यामुपासे… पाठः कीटदष्टः ।

2 कत्रवासं—इति पाठः ।

## द्वात्रिंशः प्रबन्धः

( गौरीरागेण गीयते )

॥ झम्पकतालेन ॥

ब्रह्मसुरमुनिनिकरयमनियमकर्मभरकुशकुसुमावलिललितपूततीरा ।
हंससदुपचितसारसावलिनिचितहीररुचिरुचिरपनीरनीरा ॥

जयति भुवि यत्र नगपुत्री गङ्गा ।
विचलदरविन्दचरमन्दपवमानगतिभङ्गसङ्गततरलतरतरङ्गा ।
विकचकह्लारवरजीवनलिनावलिकोकनदनवकुमुदकुलकलाङ्गा ॥
लोकलोचनहृदयसकलसुखदायिनी वीचिपरिचयदलदवीचितापा ॥

॥ ध्रुवपदमिदम् ॥१॥

कपिलमुनिकोपदवदहनहुतसगरसुतनाकपदयानसोपानलेखा[1]
जह्नुमुनिनन्दिनी नन्दितानतनिखिलदशकशतलोचनप्रमुखलेखा ॥२॥

तुहिनधरशृङ्गवररङ्गनवनर्त्तकीशिरसि समसुरभितकुसुममाला ।
अङ्गसङ्गमसुलभपरमपदसम्पदावलोकनादपि दलिततापजाला ॥४॥

कलितजलकेलिरसनागरीकुचकलशगलितकुङ्कुमपङ्ककलुषितापा ।
धौतमृगनाभिगोरोचनासीमन्तसिन्दूरतुलितलसदिन्द्रचापा ॥५॥

तीरतरुवीरुदुरुकुसुमसम्भारसुरभिकृतामृतमधुरवारिपूरा ।
कृतविविधसुकृतजननयनगामिनी सततमपमङ्गलाचारदूरा ॥६॥

सिन्धुवरवर्णिनीवन्धुरस्फटिकमणिघटिततटधरणीसोपानशोभा ।
× × × × [2] ॥७॥

1. नाकप···सोपानलेखा—पाठः कीटदष्टः ।
2. अत्र पाठस्य उल्लेखो नास्ति ।

इति तुहिनधरणिधरनन्दिनीमनुदिनमद्धेन्दुमुकुटरभसोपनीतम् ।[1]
सरभसमदमति[2]रसिकजनहृदयरञ्जनं जयति कविमान्धातृभणितगीतम् ।।८।।

इति श्रुत्वा गौरी परमरमणीयां प्रणयिनः
पुरीं काश्यामासीदनुपदमसीमाद्भुतवतीम् ।
ततः सा पुत्राभ्यां कतिपयगणैः साकमगम-
त्समाज्ञाता भावग्रहणनिपुणानङ्गरिपुणा ।।१८।।

तमागतां गिरिसुतां प्रतिपद्य दूरा-
त्पौराः प्रमोदभरलोचनवारिपूराः ।
प्रत्युद्ययुः करसरोरुहकोरकाणां
व्यूहैर्ललामकमकृत्रिममावहन्तः ।।१९।।

समागतवतीमिमां प्रणयिनिनिमेषक्षणाः
क्षणात्कृतमलङ्कृतध्वजपताकिकातोरणाम् ।
दिगम्बरनितम्बिनीमतिचिरादुदञ्चत्कृपा-
मुपाययुरुपायनश्रवणपाणयः श्रेणयः ।।२०।।

धीमन्तः प्रसृमरभारतीविलासा
मृद्वीकाफलपरिपाकलब्धवर्णाः ।
तामेतां हरवरवर्णिनीमपर्णां
वाक्पुष्पैः सुरभिभिरर्चयांबभूवुः ।।२१।।

## त्रयोविंशः प्रबन्धः

( मङ्गलगुर्जरीरागेण गीयते )

जय जय भवभाविनी पावय लोकम् ।
भवदवलोकनपरिहृतशोकम्
।। ध्रुवपदमिदम् ।।१।।

---

1. मुकुट···सोपमीतं—पाठः कीटदष्टः ।
2. सर···दमति—पाठः कीटदष्टः ।

चरणशरणजनपूरितकामे ।
चरितवशीकृतचन्द्रललामे[1] ॥२॥

त्रिभुवनजनपरिपालनशीले ।
गिरीशहृदयनयनोत्सवलीले ॥३॥

कल्पलता जगतामसि कान्ते ।
अरुणाधरनवपल्लवकान्ते ॥४॥

रुचिरदरस्मितकोरकशोभे ।
स्तनकुसुमस्तवकस्फुरिताभे ॥५॥

कररुहशिखरनवाङ्कुरजाले ।
मृगमदपत्रिकपत्रदमाले ॥६॥

अभिमतमम्ब फलसि फलजातम् ।
एकायन-गतकरतलपीतम् ॥७॥

इति रसिकश्रुतिपथमुपगीतम् ।
सुखयतु सुकविगदाधरगीतम् ॥८॥

इति हैमवतीमवतीर्णवतीं
भवतीव्रभयादवितुं जगतीम् ।
सममानयदानतमानशिर-
स्त्रिपुरारिवधूमवधूतजनः ॥२२॥

विद्यां च विज्ञाय परा पराख्या
भेदेन वेदान्तपथप्रतीताम् ।
शक्तिं जगत्कर्तुरजातयामां
भेजे परिव्राजकराजिरेनाम् ॥२३॥

1. चन्द्रलामे—इति पाठः ।

भूतलसुभगं करणी धरणीध्रसुताचिता चितापुरस्त्रीणाम् ।
पुरमथ पुरमथनस्य प्रविवेश निवेशनोत्तमाभरणाम् ॥२४॥

तामेनामधिदेवतामधिगता वाराणसीवासिनो[1]
मेनागर्भपयोधिकल्पलतिकामेणाङ्कचूडप्रियाम् ।
दुर्भिक्षं न विदांबभूवुरुदयो भूयोऽथ संपत्तयो
लोकेषु प्रथिता तदाप्रभृति[2] सा तेनान्नपूर्णाभिधा ॥२५॥

इति श्रीमदग्निचिन्नित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये
काशीप्रवेशो नाम पञ्चमः सर्गः ।

---

1. वमधिगतां—इति पाठः ।
2. प्रथितास्तदाप्रभृति—इति पाठः ।

## षष्ठः सर्गः

अथ स्मरन्त्या स्मरवीरवैरिणं
सदा जयायाः स दयावशंवदः ।
फलेग्रहीकर्त्तुमना मनोरथं
ययावयोध्या नगरीं गिरीश्वरः ॥१॥

अनुग्रहीष्यत्रहिते सखीजनै
र्जयां हरिश्चन्द्र परिग्रहाह्वयाम् ।
विलोचनासेचनकश्रियोल्लस-
द्वपुः स पुस्फोर पुरः पुरद्विषन् ॥२॥

तया पुरा चेतसि यः स शम्भोरधारि सम्भोगसुखाभिलाषः ।
विलोकितेनैव स हैमवत्याःपत्या सुसम्पन्न इवान्वमानि ॥३॥

कृशोदरी साप्यदृगोचरीकृतं ? तदाननं पार्वणशर्वरीपतिम् ।
अमुद्र आनन्दसमुद्रसंप्लवे ममज्ज लज्जासरिदङ्गसङ्गिनी ॥४॥

अथ श्रियाऽनङ्गमथः समीक्षणात्क्षणादुदञ्चत्पुलकाङ्गसंहतिः ।
उपाहरत्पादसरोरुहान्तिके कदम्बमालां स्वतनुं हरस्य सा ॥५॥

ततः स्फुटस्फाटिककुट्टिमादुमासखीं भुजाभ्यामुदतिष्ठिपद्भवः ।
विषाणदण्डद्वितयेन पाद्मनीं यथा तडागादमरेन्द्रवाहनः ॥६॥

तदङ्गसङ्गातिरसा रसालसा चिराय सा लब्धवती समीहितम् ।
अमानमानन्दमविन्ददङ्गना मनागपि प्राप न भेदवेदनम् ॥७॥

सुस्पर्शामलतल्पकल्पितमहारत्नोज्ज्वलत्काञ्चन-
स्तम्भालम्बितशृङ्खलावलिमणिपल्यङ्कपल्यङ्किकाम्[1] ।
नानाचित्रविचित्रभित्तिमभितश्चन्द्रातपालङ्कृतां
गौरीशोऽधिवसन् स सौधवसतिं रेमे समेतस्तया ॥८॥

---

1. वलि···पल्यङ्कि···पाठः कीटदष्टः ।

सा सम्भोगविमर्दवेगविगलद्धम्मिल्लमल्लीवरां
वर्षन्ती निपतन्नितम्बवसनं निर्मन्थनं तन्वती ।
उद्यत्कण्टकदर्भसूचिनिचितस्वेदाम्बुनार्घ्यं दध-
त्यर्च्चन्तीव तदा मुदा समुचितारम्भेशशम्भुं वभौ ॥९॥

अथ सा मनसिजकान्तं तं निजकान्तं समेतमेकान्तम् ।
आयासालसनयना सारसनयना जगादेदम् ॥१०॥

## चतुर्विंशः प्रबन्धः

( मुखावरीरागेण गीयते )

रतिपतिसमरसमागम-शिथिलितमिममवलम्बितचरमभुवम् ।
विविधविधानकुटिलकचसंचयमयमयतादुचिताभिभवम् ।
वल्लभतम मम शृणु वचनम् । तनुतनुभूषणगणरचनम् ॥

॥ ध्रुवपदमिदम् ॥१॥

वेशय कुचकलशं विनिवेशितविषदतरलतरहारसारम्[1] ।
पारिजात[2]सुरतटिनीकनकगिरिशिखरसमुन्नतिमानहरम् ॥२॥

अङ्गदमपि तदनङ्गविलासद सञ्जय मणिमयमुचितपदम् ।
मदय महोदयसमयद वीत मयि कङ्कणगणमपि तदनुपदम् ॥३॥

अम्बरवर्यमिह शम्बरगात्रवसमिति विमर्दसहायचरम् ।
कुचकलशाय शिवाय वितर हरिचन्दनलेपनमपि रुचिरम् ॥४॥

अधिकटीतटममरेशवेशय[3] मम रसनागुणममलतमम् ।
भङ्ग्यापनयाय ? रचितमिव कनकमयं वलयं सुषमम् ॥५॥

---

1. हारसरमिति—इति पाठः ।
2. ···रि···त···पाठः कीदृटः ।
3. ममरेशमवेशय—इति पाठः ।

पदसरसिजमनु पुरहर पूरय नूपुरयुगमपि पुरटमयम् ।
मरकतरञ्जितमपि मृदुसिञ्जितगञ्जितमञ्जुलमधुपचयम् ॥६॥

रञ्जय यावरसेन दयित मम चरणकमलमपरागभरम् ।
अरुणनखरमणिकिरणमनोरमकेशरमङ्कुलिदलनिकरम् ॥७॥

इति सुरतान्तविजयोदितमिन्दुमुकुटमनुसरसपदम् ।
जयति रसिकजनमानसरञ्जनशुकविगदाधरभणितमिदम् ॥८॥

एवं पार्वणशर्वरीपरिवृढश्रीगर्वसर्वङ्कष-
स्मेरास्यं स्मरवैरिणं स्वरमणं यद्यद्ब्रवीति प्रिया ।
गौरीतीव्रतपोऽंशभागसुभगा सा निःसहाङ्गी रहो
देवेशस्तदहो तथैव विदधे प्रेम्णा विधेयीकृतः ॥११॥

विपुलपुलकमालासङ्गमङ्गं वहन्ती
करसरसिजसङ्गे नाथ नाथस्य भूयः ।
झटितिमतिविमोहं साप्लुतानन्दसिन्धा-
वगमदसमबाणग्राहगाढग्रहेण ॥१२॥

गौरीकान्तस्तन्नखदन्तक्षतचिह्ना-
न्यह्नायान्तः किं च रतान्तक्लममस्याः ।
पाणिस्पर्शादेव निरस्याखिलनाथः
सौधादस्मादन्तरमकस्मादधितः[1] ॥१३॥

मिलन्निमीलाम्बुजलोचनैव सा
रसालसालिङ्गितुमैहत प्रियम् ।
तथा वृथालम्बितबाहुवल्लरी
न तत्परिरम्भमवाप सुन्दरी ॥१४॥

---

1. दन्तर कस्मादधिताः—इति पाठः ।

तदमी मिलन्नयनपद्मसमस्तमभयं सुदती ।
समतीतलोचनपथं प्रमथप्रभुं न लोकयति ॥१५॥

अपि दीपभानुपरिपीततमोभरसौधसद्मनि न दृष्टमसौ ।
क्षणमीक्षणाय न गतं भ्रमतो दयितं गतं निरचिनोन्न चिरम् ।१६॥

यदधिकृतवतीव प्रेषयामास वेशं रचयितुमिदमापः पङ्कमाशङ्कमाना ।
क्षितिपतिललनास्यक्षालनायेति वेलं क्षमयितुमिममेवं देवदेवं जगौ सा ॥१७॥

## पञ्चविंशः प्रबन्धः

( वङ्गालश्रीरागेण गीयते )

॥ सारिमानेन ॥

प्रियतम समयमिमं तव जाने ।
मामपहाय न पुनरपयाने ॥

॥ ध्रुवपदमिदम् ॥१॥

अह जनं भवदुपनतचित्तम् ।
रहयसि रहसि किमिदमनिमित्तम् ॥२॥

स्मरहर परिहर निरसनलीलाम्[1] ।
लालय मां मनसिजभयशीलाम् ॥३॥

विमुखे भवति न भवति मदीयम् ।
सौधसदनमिव तव कमनीयम् ॥४॥

मृदुतरकरकमलेन मदङ्गम् ।
सुखय मदनदहनातिपिहितसङ्गम् ॥५॥

---

1 नि···लीलां पाठः कीटदष्टः ।

अनुचितमाचरमिद यदि भवते ।
क्षमयति मम मतिरिदमपि भव ते ॥६॥

दर्शय वदनमुदितमृदुहासम ।
कलितकलानिधिविम्बविलासम ॥७॥

इति हरविरहिजयोदितवचनम् ।
जयति गदाधरकविवरवचनम् ॥८॥

इत्थं दुःस्थमपि प्रलप्य बहुधा सौधान्तरप्रान्तरे
भ्राम्यन्ती भ्रमवीक्षितं प्रियतम सा नैव निश्चिन्वती ।
धावन्ती तमनु क्वचित्क्वचिदपि प्रेमप्रमोदप्लुता
सश्रामा[1] श्रमजोदविन्दुनिचिता तन्वी विशश्राम च ॥१८॥

सम्भोगेन सुखं सखी[2] गिरिभुवः शम्भोरलंभाविनी
रम्भोरूरनुभूय भूय इव सा तद्विप्रलम्भं पुनः ।
संमोहादथ मायया खलु जया सुप्तोत्थितेव स्थिता
तत्रामंस्त समस्तपूर्वचरितं स्वप्नप्रपञ्चेहितम् ॥१९॥

अपनीतरता या सा सम्भृतसंभोगचिह्ननिचया सा ।
अपि पुररिपुसङ्गादन्येवालक्षि पङ्कजाक्षीभिः ॥२०॥

इत्थं सत्यवतीमनोऽभिलषितं संपाद्य तथ्यं हरः
सद्भावप्रवणप्रवीणमनसां संसारहिंसाकरः ।
तामुत्कण्ठितहृष्टपुष्टजनताकीर्णामिपण्णास्थितां
काशीं दृष्टचरीं चिराय नगरीमासोददत्यद्भुताम् ॥२१॥

जितपार्वणशर्वरीवरीयःसुषमामानुषमाननं हरस्य ।
परिपीय पुरीनिवासिनस्तत्पृथुमानन्दथुमाकुमारमापुः ॥२२॥

---

1. शश्रामा—इति पाठः ।

2. सुखं···पाठः कीटदष्ट ।

तमनन्तमनङ्गभृङ्गदायि-
श्रियमङ्घ्रिप्रियमुन्मनायितेन ।
अनुदन्ननुबन्धबन्ध्यवाणी-
प्रसराः प्रेमभराप्लुतान्तरास्ते ॥२३॥

पायादायास्यमानान् भवजलधिभवैरुर्मिभिर्ग्रास्यमाना-
नस्मान्भस्माङ्गरागः स्फुरदुरगमणिहारनीहारगौरः ।
गङ्गाभङ्गत्तरङ्गावलिचलनकुमुत्कौमुदीनाथलेखो
लेखानां शेखरोऽसौ शिखरिपरिवृतापत्यदाम्पत्यवित्तः ॥२४॥

## षड्विंशः प्रबन्धः[1]

जय नित्यवपुरभिराम । द्विजराजखण्डललाम ।
गुणवृन्द-सुन्दरधाम । ध्रुवपदमिदम् ॥१॥

तनुरोचिरतिघनसार । जगदतुलमसृणिमसार ।
स्फुरदुरगभुजङ्गमहार । स्फटिकाद्रिसततविहार ॥२॥

पदशरणतारणधीर । करुणारसातिगभीर ।
परिभूतदानववीर । रुचिनिन्दितामलहीर ॥३॥

घनभुवनभूरुहमूल । करडमरडमरुकशूल ।
भवसिन्धुवान्धवकूल । भवसुभगजनुरनुकूल ॥४॥

अतिकुन्दकैरवहास । उपहसितविकसितकास ।
हिमशैलकन्दरवास । मुनिमानसप्रतिभास ॥५॥

चरणानुतैकनिधान । चतुराननादिनिदान ।
हरसिद्धकृतगुणगान । हतदक्षयज्ञवितान ॥६॥

---

1. गीतस्यास्य रागतालयोर्नामोल्लेखो नास्ति ।

जगदखण्डखण्डनकोप । कृतसुकृतसज्जनगोप ।
सुरवैरिदुर्मदरोप । विरचितपुरासुरलोप ॥७॥

वरकाञ्चनाचलचाप । गुणगुणननिर्धूतपाप ।
धुतमानसाखिलताप । धृतजटाजूटकलाप ॥८॥

गुरुगरलभक्षणलील । शिवलोकरक्षणशील ।
नयनानलोद्भटकील । वलकलितकामनिमील ॥९॥

द्विषबन्धकाहितकरण । वृषऋषभसम्पद्भरण ।
नतपारिजातकचरण । मान्धातृसन्ततशरण ॥१०॥

शरणं चरणं दशाननस्ते हर गृह्णन् जितनाकलोक ।
जलधौ कलधौतशैलशृङ्गे पुरमध्यास्त निरस्तराजराजः ॥२५॥

## सप्तविंशः प्रबन्धः[1]

जय सुरनायकजनसुखदायक ।
जगदवनाय कलितगुणसायक धीर[2] ॥

त्रिनयननयनासेचनक विग्रहकचरित्रचित्र ।
सुरतटिनीनियतायत जय जय परमपवित्र ॥

त्रिभुवनमित्र प्रवलदमित्र व्रजसुरलोकप्रसृमरशोक ।

प्रशमदकाम प्रमथनभाम क्षितिधरधाम ।
भयहरनाम भसितललाम स्फुरदुरुधाम ॥

श्रितशितमन्द स्मितजितकुन्द प्रणतमुकुन्द ।
त्रिभुवनकन्द स्मरहर देव प्रभुकृतसेव ॥

---

1. अत्र रागतालयोरुल्लेखो नास्ति ।

2 गुणमायक—इति पाठः ।

क्षितितलपाल क्षपितकरालक्ष्वेड्सुरेश स्मृतिसुखवेश ।
प्रतनशरीर प्रकटितवीर छविवर धीर ॥

ध्वनितपटीर द्रवघनसाराधिकरुचिहारायितभुजगेन्द्र ।
त्रिदशनरेन्द्र प्रवणगदाधरकविमुद्धर धीर ॥

तस्यामोघैः पाणिघानाममोघै-
वीणावादैर्गायनैरप्रमादैः ।
वेणुध्माभिड्ढ यमार्दङ्गिकाभि-
र्द्धैर्गीताद्यै रर्चितश्चन्द्रचूडः ॥२६॥

मनोविनोदाय नवाय तन्वती
दिने दिने ते प्रतिविम्विताानि ते ।
चिरादियं प्रोषितभर्त्तृका प्रिया
त्वयाद्य पत्या समगंस्त जित्वरी ॥२७॥

इत्यन्तर्वासिनामन्तर्वाणीं प्रमोदसंपन्नाम् ।
अभिनन्दनाय तया दृशाऽनुजग्राह तान् प्रमथनाथः ॥२८॥

तुङ्गैर्गङ्गातरङ्गैर्नगरमृगदृशामुत्तरङ्गैरपाङ्गै-
र्नृत्तैर्वीथीषु रत्नैरपि च सुचतुरां धर्मकामार्थमोक्षैः ।
सृष्टो स्रष्टुः स्वरूपप्रणयनपटिमानन्दसामान्यलिङ्गैः
स्त्रीपुंसैर्भासमानामथ पुरमथनस्तां पुरीमध्यवात्सीव् ॥२९॥

इति श्रीमदग्निचिन्नित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये
सत्यवत्यनुग्रहो नाम षष्ठः सर्गः ।

## सप्तमः सर्गः

अथ तमागतमायतनेत्रया धरपुरन्दरनन्दनया पुरम् ।
पतिमवेक्ष्य पतिव्रतया दधे समदसंभ्रमविभ्रममादरः ॥१॥

निजसखीचरितं दयितां प्रति स्मरहरः सरहस्यमवोचत ।
तदभिनन्दनफुल्लदृशानया प्रतिपदं तदिदं श्रुतमादृतम् ॥२॥

निजतपः सचिवीं भवभाविनी समुचितां तनयद्वयसंपदे ।
इयमकल्पयदल्पमनेहसं व्यत्रदधत्यथ सत्यमनोरथा ॥३॥

भूमिभर्त्तुरथ पाणिगृहीती विश्रुता जगति सत्यवतीति ।
सुप्रसूतिसमयं गमयन्ती नन्दनद्वयमविन्दत सापि ॥४॥

सुतौ वीक्ष्य व्यक्तौ निजहृदि हरिश्चन्द्रनृपति-
र्वरारोहामेनां निरचिनुत मेनातनुभवाम् ।
पुरादादायैतौ द्रुतमथ पुरारातिनगरीं
ययौ दास्यं दास्यन्नगनृपतिपुत्रीप्रणयिनः ॥५॥

तीर्थेऽथ पार्थिवमणिमणिकर्णिकाया-
माप्लुत्य सम्यगुपगम्य महेशमेषः ।
निर्वाणमण्डपजुषां विदुषां पुरस्ता-
त्पुत्रौ समार्पय[1]दुमापतिपादपद्मे ॥६॥

इत्थं समर्प्य निजनन्दनयुग्ममस्मै
नन्दीश्वरं तदनु भृङ्गरटिं च भूपः ।
भूतेशमेष विनतापनताङ्गयष्टि[2]-
स्तुष्टाव भावविगलन्नयनाम्बुवृष्टिः ॥७॥

---

1. समर्पयदिति पाठः ।
2. विनतं विनयाङ्गयष्टि—इति पाठः ।

## अष्टाविंशः प्रबन्धः

( कामोदीरागेण गीयते )

शरणं भव तव चरणम् । शङ्कर भवतु भवाम्बुधितरणम् ।
शशधरखण्डमुकुटवरमण्डननिरवधिसौभगशरणम् ॥
॥ ध्रुवपदमिदम् ॥१॥

शान्तं तपसि नितान्तं त्रिभुवनविभुमपि सन्तत तान्तम् ।
हर समुपैमि भवन्तमभयकरमन्तकहरनयनान्तम् ॥२॥

सारं परममुदारं रुचिरतनूरुचिजितघनसारम् ।
कुटिलनिटिलगनयनधनञ्जयकविलितसुललितमारम् ॥३॥

दीनं माममतिहीनं पालय नियतिवशादनधीनम् ।
गिरिश नमामि मामपनय सञ्चितचरमतिदीनम्[1] ॥४॥

धीरं हतपुरवीरं निजजनपावनमहिममपभीरम् ।
काशीनगरनिवासमुपासितसुरतटिनीसुखतीरम् ॥५॥

अमलं तव पदकमलं शमयतु मामकमानसशमलम् ।
भव न भवन्तमृते परमिच्छति मम मतिरलमतिविमलम् ॥६॥

आनन्दय पतमानं भव भवनायक हतबहुमानम् ।
मा नय विषयमुमाधव मामिह भवति नतिं विदधानम् ॥७॥

इति नरपतिसमुदीत रसिकगदाधरकविवरगीतम् ।
जयति सुरभितशम्भुपदाम्बुजमधुकरसादरगीतम् ॥८॥

विश्वं दृश्यमिदं विभो भवदधिष्ठानादसम्पत्तया
चैतन्यं परिचीयतेऽपि जड़या बुद्ध्या तदध्यासतः ।
मध्यान्तादिविवर्जिताय यतिनां ध्यानायनाङ्गाय ते
निःसङ्गाय मतङ्गजाननमहासेनात्मजायों नमः ॥८॥

---

1. पीनमिति पाठः ।

स्तुत्वा तत्त्वार्थमित्थं श्रुतिचरमगिरां तं हरिश्चन्द्रभूपो
निस्तन्द्रश्चन्द्रचूडं निजनगरमसौ प्रत्यवासीदयोध्याम्[1] ।
बिभ्राणः शुभ्ररूपो करसरसिरुहात्सत्यवत्यास्तनूजौ
जायायै शैलजायै स्वयमथ भगवानर्पयामास भर्गः ॥९॥

सेवातिरेकपरवश्यतया जयायाः
सा नन्दनौ गिरिशगौरवतोऽपि गौरी ।
पश्यन्त्यनुग्रहदृशा नितरामपुष्णा-
दात्मस्तनन्धयशिशुद्वयनिर्विशेषम् ॥१०॥

नित्यं नृत्यद्भिरोघैरमरमृगदृशां सर्वगन्धर्वसंघै-
र्देवैर्मार्गा[2]भिधानैर्मधुरतलमिलद्वेणुवीणानिनादैः ।
नानाकारोपचारैस्त्रिपुरहरपुरः सर्वदा दुर्वृतद्भि-(?)
र्लेभे देवेशवृन्दै[3]रधिनगरमुमाजानिराजानसौख्यम् ॥११॥

न पक्षे संक्षेप दधदपि न रात्रिंदिवमिदं
निजां लक्ष्मीमृच्छत्क्षणमपि पुरध्वंसिनगरम् ।
सुधाधारैः शुभ्रं सकलकलमभ्रङ्कषतया-
विडम्बं विम्बस्य व्यतनुत सुधांशोः समुचितम् ॥१२॥

अथ नवमवतीर्णः पूरणयन् प्रीतिमन्तः
प्रभुरिव कुसुमानां मालभारी वसन्तः ।
मलयनिलयभाजा दत्तहस्तोऽनिलेन
प्रमदपरभृताभिर्गीतमाङ्गल्यकीर्त्तिः ॥१३॥

अपि कंचन पञ्चशरप्रसरं विदधद्विविधं विबुधाधिपतौ ।
स मुदं समुदञ्चयितुं जगतामुदजृम्भत संभृतकाममदः ॥१४॥

---

1. पत्य आसीदध्योयामिति पाठः ।
2. संघैर्मागा—इति पाठः ।
3. देवेशवृ···पाठः कीटदष्टः ।

दिशि दिशि समुल्लसन्तं ततो वसन्तं पुरारिराकलयन् ।
ऊचे वाचमुदारां निजदारान् प्रेमपूरगम्भीराम् ॥१५॥

## ऊनत्रिंशः प्रबन्धः

( वसन्तरागेण गीयते )

॥ सूड़प्रबन्धेन ॥

समुदयति सखि स्मरसहचर ऋतुपतिरेष विशेषमनोहर-
कुसुमसमूहनिरन्तरनिर्भरमुखरपिकनिकरकानन ॥

विकचकमलवनधूननपरिमलमलयमहीधरमारुत-
संचलदभिनवपल्लवसंकुलतरुकुलमण्डितसकलदिगानन ॥

मल्लीमुकुलसौरभलोलुभसंमिलदलिमञ्जुल-
गुञ्जितसम्पादितमनसिजविजयदकम्बुनादडम्बर ॥

कोकिलकलकूजितपरिचयचूतमुकुलनूतनपरिचय-
परिहृतनवसूनरसादरनागरयुवहृदय ॥

॥ निःसारि ॥

विगतशीतसमुदितघर्मसमयशर्मदम् ।
कुसुमसारवनविहारवलिततरुणसंमदम् ॥

हृषमाणकुसुमबाणमानसमदवर्द्धनम् ।
विदधत मतिविरहियुवतीहृदयं धृतिवर्द्धनम् ॥

॥ मण्ठतालः ॥

मञ्जुलतरवञ्जुल[1] दरदलितललितसुमनसम् ।
मृदुलगीतमधुपपीतकुसुममधुरमधुरसम् ॥

विकचकुन्दसुन्दरकीर्त्तिविततिशोभनम् ।
लोकय जननयनमदनमृतुपतिमतिलोभनम् ॥

---

1. दञ्जुल—इति पाठः ।

|| सिंहनन्दनताल: ||

माधवीसाधुपरिरम्भणारम्भगतगन्धभृतमन्दपवमानजवलम् ।
चन्द्रमुखरजनिमुखमुदितदर्पककामिनीकुलकलितकामहेलम् ॥

लोचनासेचनककुसुमसमयोदयं लोकमानाभिनवमनवहेलम्
दयिततनुसङ्गमतिमिङ्गिलं का नु बहुमानयति मानिनी नानुवेलम् ।

|| झम्पकताल: ||

अधिवनावनिविकचकिंशुकराजिरियमिह सन्तताम् ।
बहति रसिकवसन्तनायकदन्तनखपदकान्तताम् ॥

विकसदरुणिमपल्लवावलिकैतवेन वनश्रिया ।
स्फुटमतनुरनुराग आगत ऋतुवरे धृतकान्तया ॥

|| त्रिपुटान्तरा यति: ||

पुष्पचापच्युतैरच्युतैराशुगै रागिणी लक्षिता[1] लक्षतो भाविनी ।
भाविनी लक्ष्यते शम्बरारेर्जयश्रीरसाधारणै. कारणैर्द्ध्विन:[2] ॥

|| अड्डुताल: ||

दलितललितकुङ्कुमरसचर्चितमङ्गरागम् ।
मघनसारगन्धसारलम्भितपरभागम् ॥

युवतीतातिरिह जनयति भृशमुपचितकामम् ।
ध्यायति हृदि दयितसततसङ्गममभिरामम् ॥

|| सप्तकल: ||

इह रमणीयरमणीविलासा विकसितकैरवभैरवहासा ।
अन्तिकगतमपि हन्त नितान्तं कामयते नवनवमिव कान्तम् ॥

---

1. रागिणीं लक्षिता—इति पाठः ।
2. श्लोक इवानुमीयते ।

॥ देढ़ोपडीताल: ॥

सखि मधुरयि मधुरपरभृतालाप-सुभग-दक्षिणमरुता ।
पथिकमनसि किंचन चलिते मोहनिवहमहह वलयते ॥

॥ डेङ्कि वा पञ्चकला ॥

कलय कलावति दलितलवङ्ग मलयनिलयमनिलं सुखसङ्गम् ।
यो वितनोति पुलकमयमङ्गं जीवयतीव परेतमङ्गम् ॥

॥ सारिमानकुडुक्कताल: ॥

बहति विहरणकेलिकानने स्वेदबिन्दुचयसमुदितमानने ।
कनककमलसदृशि विमलमुक्तिकाभरणसुगममनुपमतनुनायिका ॥

॥ चाचपुट: षट्कल: ॥

शीतकिरणकिरणराजिरञ्जिते गीततालकङ्कणगणशिञ्जिते ।
ललितललितसदनराजदङ्गणे रतिरसचलजन इह ललनागणे ॥

॥ निरोष्ठ्यगीतम् ॥

॥ चतुर्विंशातकलेन नलकूवरतालेन ॥

सुदति सुदति विषमविशिखविततिभिरति-
विरहियुवतिहृदयमदयरतिपतिरिह समय उदयति ।
अपि मुनिजनतपचितवनविहरणरतिं रचयति सति
मधुरमधुरजनिरनिभृतपरभृतविरुति ॥[1]

॥ सर्वं लघुगीतम् ॥

॥ त्रिंशत्कलेन नलकूवरतालेन ॥

घटयति कनकघटस्तनी कामम् । अप्यसुलभविषयेषु कामम् ॥
मधुरलमयमधुना । ध्रुवपदमिदम् ॥

---

1. सुदृप्रबन्धस्य पङ्क्तिशेषभागेषु आ, इअ इत्यधिकलेखोऽस्ति ।

प्रकटयति स्मरशरपटिमानम् ।
अपि मुनिमानसमोहनिदानम् ॥
इति ऋतुपतिगुणवर्णनवचनम् ।
जयति गदाधरकविवररचनम् ॥

इह सह सुमनोभिर्द्रूनयन्ती वधूनां
हृदयमुदयमाना मारुती चारुलीला ।
अपहरति परागैः साकमेवापरागं
सुरभिरभवदेवं साम्प्रतं गन्धवाहः ॥१६॥

सुभगावगाहनीराः सतां मनोवत्प्रसन्नगम्भीराः ।
पद्माकराः सराग सुमुखि वसन्ते विकाशन्ते ॥१७॥

इति गिरिपुरुहूतापत्यमादृत्य पत्या
गदितममृतबिन्दुस्यन्दिसन्दर्भगर्भम् ।
ऋतुवरगुणगानं गृह्णती सावधानं
प्रणयविनयसारां वाचमाचष्ट गौरी ॥१८॥

इह विजनवनान्ते वर्त्तते नो विहर्त्तुं
स्पृहयति मम चेतस्तद्विविक्ताय चेतः ।
यदि मयि करुणासीद्वारणासीसदृक्षं
कथय दयित गुप्तं स्थानमानन्दनाय । १९॥

तदनु वरतनुं तां प्रीणयन् प्राणनाथः
स्मितललितमुखेन्दुः सिन्धुबन्धुप्रतीरे ।
अधिधरणि यदेकेत्यादि वेदप्रसिद्धं
विपिनपदमवादीदेकचूताभिधानम् ॥२०॥

दारुब्रह्मादिनाधिनाथविरजःक्षेत्राणि सन्त्युत्कले
देशे जैमिनिखण्डवर्णनमहामाहात्म्यलेशे खलु ।
तेषामन्तरभूमिभूषणमणीभूतां प्रभूताम्बुभि-
स्तीर्थैः कोटिभिरुत्तमैरभिदधुर्यां गुप्तवाराणसीम् ॥२१॥

गिरीशवरवर्णिनी गिरिशवर्णनाकर्णना-
द्बभार भृशमुन्मनास्तदवलोकनालोलताम् ।
स तां हिमवतः सुतां त्रिजगतां धुरीणः पुमा-
नमन्यत पुरःसरीमवतरीतुमस्मिन्वने ॥२२॥

ससार सारनायिका लतालतालिचारवं[1]
ससारतारलोचना प्रसारिकोकिलारवम् ।
अनन्तपूरुपोत्तमप्रभुप्रभावपालितं
वनं तदेकचूतकं नवप्रवाललालितम् ॥२३॥

सुगन्धिना गन्धवतीनभस्वता
वनं तदा धूनितसूनपल्लवम् ।
ददर्श संक्रन्दननन्दनादपि
प्रति प्रतीकाद्द्रुतमद्रिनन्दना ॥२४॥

नागानां नकुलैर्भवेन्न कलहो यस्मिन् प्रशान्तात्मभिः
श्येनोऽप्येन उपाददीत पतगालम्भार्जितं यत्र न ।
निर्वैरैः प्रशमायनैर्मुनिजनैरध्यासिते दृश्यते
प्रीत्या यत्र समं कुरङ्गशिशुभिः शार्दूलविक्रीडितम् ॥२५॥

इतस्ततश्चारुचमूरुनेत्रया तदापदासारभ्रमाशया तया ।
व्यलोकि लिङ्गं तदनङ्गवैरिणो वदन्ति यद्ब्रह्मविदः परंपदम् ॥२६॥

विजानती साथ सिताऽसितारुणं पुराणलिङ्गं पुरवैरिसुन्दरी ।
श्रुतिप्रतीतं तदपूजयत्तदा समीहिताभिः सुमनः समृद्धिभिः ॥२७॥

अन्तरमन्तरममुष्मिन् पश्यन्ती विश्वनाथनो नाथम् ।
अस्तुवत तत[2] एषा त्रिगुणातीतं च दृक्पथानीतम् ॥२८॥

---

1 सारनाथमनालितारवमिति पाठः ।

2 स्तत—इति पाठः ।

## त्रिंशः प्रबन्धः

( मङ्गलगुर्जरीरागेण गीयते )

॥ षट्पदीकुडुकतालेन ॥

हृदय भज त्रिभुवनविभुलिङ्गम् ।
सकलसुमङ्गलममलमलिङ्गम् ॥
निगमपथ-प्रथमपथविदूरम् ।
अवितथमविरतकामितपूरम् ॥
शान्तमान्तरतिमिरखण्डनचण्डभानुमुदित्वरम् ।
चित्रतनुरुचिपाकशासनसायकासनजित्वरम् ॥
असुरसुरनरनागकिन्नरसिद्धचारणसेवितम् ।
योगिमानसपङ्करुहलसदङ्कसौरभमन्वितम् ॥

॥ त्रिपुटतालः ॥

निरुपममपि[1] रचितरुचिरतररूपम् ।
अमृतममृतसम्विदानन्दरसकूपम् ॥
सततकृतसेकशतलक्षमितलिङ्गम् ।
अक्षयालयकनककूटगिरिशृङ्गम् ॥

॥ झम्पकतालः ॥

सुकुसुमपुञ्जसुषमपुञ्जमन्दमलयमारुतम् ।
चञ्चलपिकचञ्चरीकपटलपटुतमारुतम् ॥
मण्डय दलममलपूतमेकचूतकाननम् ।
चण्डकिरणखण्डनरुचिरुचिरतरदिगाननम् ॥४॥

---

1. निरुगममपि—इति पाठः ।

॥ मण्ठतालः ॥

हरि-कमलासनपरिचरणीयम् ।
नायकनायकसदनुसरणीयम् ॥

मुनिजनमानसनिर्मलहंसम् ।
कलितकमलाकरशकलवतंसम् ॥

मरुभुवि मिहिरमरीचिषु कमलम् ।
स्फुरति यथा वितथात्मकममलम् ॥

लसति तथा सति जगदिदममलम् ।
यत्र विवर्त्तितमसदपि सदलम् ॥

यन्निजहृदयसरोरुहनिहितम् ।
भजत गदाधरकविवररचितम्[1] ॥

भवभयशमनमखिलविपदपदम् ।
ददद्विखण्डितसुखपरमपदम्[2] ॥

द्रष्टारं त्वां गुणपरिणते दृष्टसृष्टेरदृष्टं
विज्ञातारं निखिलजगतामप्यविज्ञाततत्वम् ।
व्याकर्त्तारं भुवनभवनस्याहुरव्याकृतं यं
स त्वं साक्षात्कृत मम कथं दृक्पथं यासि देव ॥२९॥

कान्ते सास्मिन्नेकदा काननान्ते
कुण्डोत्तीर्णं कुन्दपूर्णेन्दुवर्णम् ।
कुण्डोध्नीनां नैचिकीनां सहस्रं
लिङ्गं क्षीरैः स्नापयद्वीक्षते स्म ॥३०॥

1. गदाधरसुकविवररचितिमिति पाठः ।
2. एकताली इत्यधिकलेखोऽस्ति ।

संपश्यन्त्याः सौरभेयीस्ततस्ता-
स्तस्याभावः संप्रहीतुं बभूव ।
ज्योतिर्लिङ्गे क्षीरपूराभिषेकं
कर्त्तुं भर्त्तुः स्नेहमन्तर्वहन्त्याः ॥३१॥

गोपायन्ती त्रिभुवनमिदं गोपयन्ती पुमांसं
मांसाशेभ्यो मुनिजनमनःस्थानमानन्दकन्दम् ।
पान्ती तापात्पशुपतिवधूर्गो[1]मगादर्थयोगाद्
गोपीरूपं विपिनममुना ताः सवत्सा न्यरौत्सीत्[2] ॥३२॥

दुग्धं स्वयं नवदुग्ध दुग्धं भुवनाधिनाथलिङ्गस्य ।
अङ्गे सिञ्चन्ती सा कंचन मनसः प्रसादमगादुमा ॥३३॥

त्रिभुवननायकलिङ्गादैशानीमास्थितामाशाम् ।
प्रमथमहीपतिमहिषीं तदवधि गोपालिनीति गायन्ति ॥३४॥

लिङ्गं गाङ्गेयजूटानलनिलयचरं शूलिनः पूरयन्ती
श्रद्धां बद्धान्तरङ्गाननमवनमिता[3]कुर्वती पार्वती सा ।
वासैराशामशेषां[4] कुसुमविसृमरैर्निर्भरं पूरयन्ती
रेमे रामा पुरारेर्विपिनभुवि पुरा वारणस्यामिवास्याम्[5] ।३५॥

इति श्रीमदग्निचिन्नित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये
एकाम्रकाननवर्णनं नाम सप्तमः सर्गः ।

---

1. वधू···म पाठः कीटदष्टः ।
2. त्सान्य···पाठः कीटदष्टः ।
3. मवनताः—इति पाठः ।
4. वासौरीशामशेषामिति पाठः ।
5. मिवासामिति पाठः ।

## अष्टमः सर्गः

अथैकदैकान्तवनान्तरैकिकां
विकाशिपङ्केरुहचारुलोचनाम् ।
समीक्ष्य तां क्षोणिनरेन्द्रकन्यका-
मकामयेतां द्रुमिलस्य नन्दनौ ॥१॥

रतां वने तां भुवनेशपूजने
नवप्रसूनान्यवचिन्वतीं सतीम् ।
प्रतीपयन्तौ पटुचाटुकोक्तिभि-
र्विभिन्नधर्मस्थितिवाचमूचतुः ॥२॥

कापि त्वं करभोरु भोगिनगरीकन्यासि वन्याचरी
गन्धर्वी किमु किन्नरी किमथवा पौरन्दरी सुन्दरी ।
किंवा शम्बरवैरिवीररमणी भूषामणी योषिता-
माहो सिन्धुसुता नताङ्गि भवतीं स्पष्टं न जानीमहे ॥३॥

कोदण्डश्चलचिल्लीवल्लरिरियं नीले दृशावुत्पले
श्वासोऽसावतिसौरभः स्मितलवो मल्लीमतल्ली तव ।
पाणिः शोणितपङ्कजं कलयसेऽशोकं मनस्तन्वि त-
त्तन्व्याः साङ्गमनङ्गमङ्ग न कथं दग्धस्तमस्तार्पणात (?) ॥४॥

आस्यं ते खलु शीतदीधितिरियं मालेयमिन्दीवरी
लीलापाङ्गतरङ्गितानि कमले पाणी इमौ कोमलौ ।
रम्भाशीतलशैलमूरुयुगलं लावण्यसाराम्बुधे
तन्नौ तन्वि विधेहि सङ्गमसुखेनानङ्गतापव्ययम् ॥५॥

मुक्तानां गुणसन्ततो रुचिजुषां श्रेणीभिराराधितः
प्रौढ़ां दर्पकदर्पसम्पदमलं संबद्ध यन्त्रीक्षणात् ।
नित्यं भोगविभूषणातिसुभगः श्रीखण्डचन्द्राङ्कितो
रम्भोरुस्तनकुम्भ एष तुलनां शम्भोस्तवालम्बते ॥६॥

इति वचनमलं तयोरयोग्यां नृपसुतयोस्तदभावयोर्निशाम् ।
स्मरहरचरणाम्बुजं स्मरन्ती धरतनयान्तरधादधार चेर्ष्याम् ॥७॥

अथ तत्र शिखण्डमण्डनस्तडिदम्बरस्तदनुविडम्बिताम्बुदः ।
वनमाभारि हृदयस्थलः कलस्वनवशमागमदुमाप्रियंकरः ॥८॥

## एकत्रिंशः प्रबन्धः

( गुर्ज्जरीरागेण गीयते )

नीलकण्ठशिखण्डमण्डनचारुकेशम् ।
मौलिमञ्जुलकुसुमसंचयसंनिवेशम् ॥

कनकमयकुण्डलोज्ज्वलगण्डदेशम् ।
कुन्दकुमुदकदम्बडम्बरहासलेशम् ॥

सा निपीय दृशा भृशमातुरया महेशम् ।
प्राप कामपि गोपिकामुदसंनिवेशम् ॥
॥ ध्रुवपदमिदम् ॥१॥

चिल्लीचलुकितमानिनीजनमानससिन्धुम् ।
नीलनीरजलोचनं निजजीवबन्धुम् ।
कम्बुकण्ठविलम्बमानकदम्बमालम् ।
ललितमापदलम्बया वनमालयालम् ॥२॥

रचितविविधविधानगैरिकतिलकभालम् ।
पीतपटपरिवीतकटितटकाञ्चिजालम् ॥३॥

मुरलिकाकलगीतनर्त्तितहरिणबालम् ।
रणितमणिमयकङ्कणालयकलितनालम् ॥४॥

शृङ्गेरवशृङ्गसङ्गतबाहुमूलम् ।
सुरभिवनभवसूनपल्लवचुम्बितचूलम् ॥५॥

नारारिनयनाभिमतशुभनाभिकूपम् ।
रोमराजिविराजमानमुदाररूपम् ॥६॥

चरणपङ्कजसहजसहचरहंसकाभम् ।
मृदुलपदतलपूतभूतलपरमलाभम् ॥७॥

पशुपतनुमितिपशुपतिप्रतिसप्रणीतम् ।
जयति भुवि कविवरगदाधरसरसगीतम् ॥८॥

पश्यन्त्यथ स्मरपथ दयितं विधाय
निर्मन्थनं स्वतनुचम्पकचारुमालाम् ।
तत्पादपङ्करुहि कुञ्चितकेशजालं
शैवालमातनुत सानुमतः कुमारी ॥९॥

ततः समुत्थापितया पिनाकिना
भुजोपपीडं परिरभ्य निर्भरम् ।
दुरात्मतां भण्यत कीर्त्तिवासयोः
सयोग्यमेतद्वधमङ्गयचीकरत ॥१०॥

तथागतां तां नृपनन्दनद्वयं
विचिन्यदुन्मत्तमिव भ्रमद्वने ।
नवप्रसूनान्यवचिन्वतां पुन-
र्विलोकयामास विलोललोचनाम ॥११॥

अथोपगम्यतामेतौ मन्मथोन्माथिमानसौ ।
मानसौभाग्यवाचाटौ चाटुवाचमवोचताम् ॥१२॥

## द्वात्रिंशः प्रबन्धः

( मारुरागेण गीयते )

वद तव कुमुदकलाकरसुन्दरवदनविलोकनलोलम् ।
कोऽनुनयनचकोरमनिशं मयि खेलयति स्म विलोलम् ॥
सुन्दरि निशमय वाचमुदाराम् ।
आचर तदुचितमनु न चिरादनुरागसुधारसधाराम् ।
॥ ध्रुवपदमिदम् ॥१॥

तव नवपल्लवमधुरतराधरमधुरससरभसपानम् ।
सुभगतमं कतमं जनयति जनममृतकृतातिविगानम् ॥२॥

सुतनु वितनुसङ्गमनङ्गमहोदयदायिविलासम् ।
चिरमनुगतवति दासजने सविकासकुमुदमृदुहासम् ॥३॥

भ्रमरतरलतरतारविलोचनसरसिरुहं तव कामम् ।
कुसुमशरासनबाणरहितमपि जापयते किल कामम् ॥४॥

वेल्लितचिल्लीलता कुपिता हृदि कलयसि नो यदि नाशम् ।
सन्तनुदन्तनखरखरखरघातनबाहुयुगलगलपाशम् ॥५॥

भवदवतोऽजनि शुभदिवसावधिगाढमुदयतनुरागम् ।
नयनयुगं कवचिदपि न वितृप्यति तदितरविषयविरागम् ॥६॥

परिहर नौ न विहर वरवर्णिनि सुखमधिसौधनिकेतम् ।
हन्त वनं तव नेदमुचितमिव कण्टकविषमसमेतम् ॥७॥

इति धरवरतनयानुनयाकुलकीर्त्तिवाससमुदाहृतम् ।
जयति रसिकनवदुर्गधराधिपसुकविगदाधरगीतम् ॥८॥

इति स्मरोन्माथवशंवदात्मनोर्मनोरथं हन्त दुरन्तसारसम् ।
अवेत्य दैत्यात्मजयोर्बभार सा विलोचनं कोकनदच्छदच्छविः ॥१३॥

स्कन्धारोहाय सत्यमियमभिदधती वञ्चयित्वा विचित्तौ
पादाभ्यां निष्पिपेष क्षितिपतितनयौ क्षेमहीनौ क्षणेन ।
उत्फुल्ललोचनानां दिवि च दिविषदां पश्यतां तत्र देवी
देवीपादाभिधानं त्रिनयनवनिता निर्ममे पुण्यतीर्थम् ॥१४॥

श्रमादिवाथ प्रमदा पिनाकिनो
मनोरमे कुञ्जकुटीरकुट्टिमे ।
सुखं निदद्रौ समुपागतश्च त-
त्क्लमापनोदाय तदा सदाशिवः ॥१५॥

कान्तं पदान्तोपगतं विलोक्य
त्रेपे समाकुञ्चितवामपादा ।
श्रान्ता शयाना स्मरवैरिकान्ता
तदादि सा पादहरा प्रतीता ॥१६॥

तदन्ययाथ प्रिययाभियाचितः
सुशीततोयं किल नीललोहितः ।
चखान शूलेन तदाशुवापिकां
प्रकाममप्रापयदम्बु चाम्बिकाम् ॥१७॥

तीर्थानां पावनानामधिकृतपरमानन्दमादाय विन्दुं
विन्दुं वालेन्दुमौलिस्त्रिभुवनतलतो लीलयाध्युष्टकोटेः ।
चक्रे विन्दूद्भवाख्यं विमलमिह सरः पापसन्तापनाशं
यत्रास्तेऽन्तःप्रकाशं त्रिजगति विदिता वापिका शङ्करस्य ॥१८॥

तीर्थानि पङ्करुहमण्डलमण्डितानि
तत्रोपतीर्थनिकरं च हरश्चकार ।
यत्सेवनात्सकृदपि प्रविशन्ति योनौ
न ब्रह्मसम्बिदमृतेऽपि जना जनन्याः ॥१६॥

अथ कदाचिदचिन्तितवैभवः प्रियतमामतमाकलयन् भवः ।
अनुससार विहर्त्तुमना जनानुपहतं तटिनीतटकाननम् ॥२०॥

सुगन्धिभिर्गन्धवतीसमुद्भवैर्नवैः सरोजैरधिवासितान्तरम् ।
तरङ्गसङ्घातितुषारमारुत वनप्रियव्रातमधुव्रतारुतम् ॥२१॥

सरिद्वरां तुङ्गतरङ्गशोभितां
विकाशिपङ्केरुहषण्डमण्डिताम् ।
स तत्र चित्रोत्पलमालभारिणीं
निरीक्ष्य देवीमवदत् प्रियम्बदः ॥२२॥

## त्रयस्त्रिंशः प्रबन्धः

( सारङ्गरागेण गीयते )

सुन्दरदलदरविन्दमुखी मुखरभ्रमरध्वनिगीता ।
शैवलकोमलनालकलापवती रससम्पदुदीता ॥
प्रेयसि गन्धवती युवतीयम् ।
वलयति कलय वलादिव मानसमतिकुतुकाय मदीयम् ॥
॥ ध्रुवपदमिदम् ॥१॥

अनिलतरलनवनीलसरोजसलीलविलोचनमाना ।
विषदकुशेशयसञ्चयमन्दहसितशितरोचिरहीना ॥२॥

मृदुलमृणालभुजारुणकुवलयमञ्जुलकरतलशोभा ।
संहतमिथुनरथाङ्गभूनस्तनकनककलशलसदाभा ॥३॥

दधती सरसगभीरनिजामृतमनुसृतकेलिनितम्बा ।
जलदपरिधानतटानवगुण्ठितपृथुतरपुलिननितम्बा ॥४॥

कलितसालकलहंसवतसकरोमावलिलसदङ्गा ।
नयनमनोरमनीरपरिभ्रमपटुतमनाभिविभङ्गा ॥५॥

जलचरविविधविहङ्गमकलकलरसनारवपरभागा ।
अन्तरचरकरिमकरकरस्फुरदुरुजनितजनरागा ॥६॥

हंसकतरलवलयमुखरीकृतशोणसरोरुहपादा ।
तदुदरकेशरनिकरसमाहृतनखमणिकिरणविवादा ॥७॥

इतिकृतगन्धवतीगुणवर्णनमन्धकरिपुसमुदीतम् ।
सरसपदं हिमगिरितनयामनुजयति गदाधरगीतम् ॥८॥

एवं धुनीमधुरिमाणमुमासहायस्तत्राभिनन्द्य धुतनन्दनमाधुरिके ।
केलीवने कुसुमकल्पिततल्पपुञ्जे कुञ्जे रतिं स गृहमेधिवदाससाद ॥२३॥

खपाणिपद्मावचितैः रुचिरैः रुचिरस्थले ।
आकल्पं कल्पयामास भवान्याः कुसुमैर्भवः ॥२४॥

लोकानामथ मन्मथप्रसरणं चित्ते दधत्कामिनां
लोकानां करणीयमूढमनसां शोकातिरेकानपि ।
अश्रान्तं हरितां परिभ्रमवशादुद्भूतभूरिश्रमो
विश्रामाय नु भानुमानुपययावस्ताचलाधित्यकाम् ॥२५॥

नीतेऽस्ताचलतुङ्गशृङ्गमवशं निःशेषनश्यद्वसौ
समाश्वे विनिपातितेन विधिना[1] नीरे गभीरेऽम्बुधेः ।
अम्भोजैर्मुखमुद्रणानिनिपुणैरम्भोदधेः संभवे-
न्मित्रेष्वापदि नो जडाश्रयजुषां वाचापि साहायकम् ॥२६॥

उच्चैरप्यपहाय दानबहुलं वेतण्डगण्डस्थल
यं श्रीलं खलु शिश्रिये जलरुहं सौरभ्यलुभ्यन्मनाः ।
मित्रे नश्यति सोऽयमस्य वशवर्त्तत्रैव दुर्दैवतः
कारागारति चञ्चरीकचतुरः कां कां दशां नास्थितः ॥२७॥

इह वारुणीस्वर(?)सरोऽवनतं पतितं निरीक्ष्य बत मित्रमपि ।
उचितं किमाचरतु पद्मकुलं मुखमुद्रणां शरणमेकमृते ॥२८॥

नीते वेदतनौ बलादिव पयःपूर पुरो वारिधे-
र्ध्वान्तैकान्तनिशाचरेण रजनीप्रारम्भ एव क्षणात् ।
संभूयस्तुवतामवर्त्त ततरामुच्चैर्द्विजानां वचः
किं भूयः पृथुरोमरूपकलना क्लेशाय केशिद्विषः ॥२९॥

मार्त्तण्डे जगदण्डदीपकलिकायीतिदिष्टे चिरा-
दासीदूर्ध्वकपालपालिकलितं यत्कज्जलं श्यामलम् ।
नीरन्ध्रं समभारितेन गगनं व्याजान्धकारात्मना
यत्रोन्मीलितनिर्विवेकवदभून्नो तारतम्यस्थितिः

इति श्रीमदग्निचिन्नित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये
एकाम्रवनविहारो नामाष्टमः सर्गः ।

---

1. विनिपातितेनायविधिना—इति पाठः ।

# नवमः सर्गः

ततो हरि हरिद्वधूमुखपटीरपङ्कद्रवो
नवोदितकुमुद्वतीस्मितनितान्तसम्भावितः ।
तमोमुषितचक्षुषां वत किमप्यमोघौषधं
सुधानिधिरधिष्ठिता व्यजयतो दयार्द्रैः शिरः

अथ प्रियायाः प्रणयोत्कचेतसः
समीक्ष्य मन्दं स्मयमानमाननम् ।
वनं च[1] तारापतिचन्द्रिकाञ्चितं
नितम्बिनीं तां निजगाद शङ्करः ॥२॥

निःशेषं क्षयति स्म नान्धतमसं द्रागीषदुन्मेषतः
किं वा नन्दयति स्म सुन्दररुचां नेत्राणि न प्राणिनाम् ।
मूर्च्छां प्राप्य वियोगिनां यदधिकामस्मिन्नुदिते पुनः
शङ्के पङ्कनिभ तदेतदुदितं राकापतौ लाञ्छनम् ॥३॥

शङ्के पङ्कजसम्भवोऽखिलगुणानाच्छाद्य शीतद्युते-
स्तन्वि त्वन्मुखकर्मनिर्मितकलादाक्षिण्यमख्यापयत् ।
शिष्यन्ते परमत्र लाञ्छनकलासंस्थानवस्थादयो
दोषा एव निशाकरो निगदितस्तेनैव दोषाकरः ॥४॥

पश्यंस्तेऽनुपमानमाननकलानाथं कलङ्की स्वतो
रात्रौ नूनमपत्रपाकुलमनाश्चन्द्रो विनिर्गच्छति ।
उद्यन्तं तमवेक्ष्य तावकमनुभ्रान्त्या मुदन्त्यान्वितं
समीलत्यमलं निशासु कमलं तन्वङ्गि मन्यामहे ॥५॥

---

1. ⋯पाठः कीदृशः।

स्फुटन्मल्लीवल्लीमधुरिमधुरीणो मधुरसौ-
बनोद्दे शोऽप्येषोऽनुपदहृदयानन्दजनकः ।
सुधामूर्त्तिश्चायं प्रवलितमनोजन्मविभवो
नवोदश्चद्भाव प्रणयिनिमनश्चञ्चलयति ॥६॥

## चतुस्त्रिंशः प्रबन्धः

अनुगतरागसरागमधुरततगीतकलासमुदीतगुणे ।
गायति युवतिगणे हृदयङ्गममुदयदनङ्गमदे निपुणे ॥
॥ ध्रुवपदमिदम् ॥१॥

विपुलकपोलपुलकचयचुम्बनमुदितनितम्बवतीनिकरे ।
अतनुमदाहिततनुपरिरम्भणलम्भितरतिशशिखण्डधरे ॥२॥

कुङ्कुमरेणुनिचयकृतखेलनरञ्जितसकलदिगन्तमुखे ।
विलसदपाङ्गतरङ्गयुवतिजनसङ्गमनिरुपमदयितसुखे ॥३॥

इति धृतरासरसादरपुरहरविहरणवर्णनविपदपदे ।
रसिकगदाधरकविभणिते मतिमिह बलयति खलु को नु मुदे ॥४॥

एतासामथ रासमण्डलजुषां योषावराणामभू-
द्योऽसौ भागमदादनङ्गजयिनि स्वाधीनधीरीश्वरे ।
तामेतां प्रतिहन्तुमन्तरदधादन्तर्बतां तत्क्षणा-
दन्तर्य्यामिपुमानुमासहचरः साकं तया शङ्करः ॥७॥

अन्तर्द्धानमुपेत्य सोऽप्यभिमुखं चण्डत्विषा च प्रिये-
तासां नाससुखावहं वनमहो तत्पादिनीनामिव ।
चिन्तामन्त[1]मसत्प्रसर्पणवशभ्रंशद्बहिःस्फूर्त्तयः
पश्यन्ति स्म मृगीदृशो दशदिशः शून्याः परं सर्वशः ॥८॥

---

1. चिन्तासमन्तमत्त—इति पाठः ।

पुररिपुस्तु सुपुष्पितमाधवी-
कुसुममञ्जुनिकुञ्जनिकेतनम् ।
अधिवसन्नवतन्वि[1] समीहितो
दयितया रमते स्म समं तया ॥९॥

चारुतारुण्यलावण्यलीलालालितमानसः ।
शम्भुः सम्बोधयामास मोहिनीति प्रियां मुहुः ॥१०॥

प्रियतमान्तरनामपदभ्रमादुदयदिन्दुसबन्धुमुखीश्वरा ।
अधितकोपमथप्रेमथाग्रणीरनुनिनाय विनायकमातरम् ॥११॥

## पञ्चत्रिंशः प्रबन्धः

( मुखावरीरागेण गीयते )

सुरभिसमयमिममतिमधुरम् ।
मा विफलय विधुमुखी मधुरम्[2] ॥
मानिनि परिहर मानभरम् ।
मानय किंचन पञ्चशरम् ॥
॥ ध्रुवपदमिदम् ॥१॥

नमयसि किमयि मुखं रुचिरम् ।
लिखसि भुवं च नखेन चिरम् ॥२॥

उचितमिदं तव किमु दयिते ।
वद[3] वचनं गुणवति मयि ते ॥३॥

---

1. नवितन्वि—इति पाठः ।
2. मधुरं—पाठः कीटदष्टः ।
3. यद—इति पाठः ।

विस्मरसि स्मरललितमये ।
कथमिह कुसुममये समये ॥४॥

जयति सुमुखि तव नयनमिदम् ।
रागं वमदिव कोकनदम् ॥५॥

स्नपयसि नयनजलेन तनुम् ।
नूनमतनुपरितापतनुम् ॥६॥

सखि मुखमुन्नमय मन्दहसम् ।
सकलकलं जयचन्द्रहसम् ॥७॥

इति गिरिशोदितचटुवचनम् ।
जयति गदाधरकृतरचनम् ॥८॥

सनालमरुणाम्बुजं शरदिजेन पूर्णेन नो[1]
नितम्बिनीविरोधिना न परिरम्भणायोचितम् ।
प्रतीपपरिवर्जनं परजनस्य यन्मन्यसे
वशीभवसुहृज्जनं त्यज न[2] मानलोभेन माम् ॥१२॥

वसन्ती वासन्ती सरभसपरीरम्भचटुले
रसाले सारम्भं सुदति कलकण्ठी निगदति ।
समासङ्गेऽनङ्गे[3] परिचरति कान्तं प्रियतमा
न मानस्य श्रीमानयमवसरः पुष्पसमयः ॥१३॥

---

1. पूर्णेना—इति पाठः ।
2. राजन—इति पाठः ।
3. सङ्गेनाङ्गे—इति पाठः ।

अथ यौगिकमर्थमुन्नयन्तो दयितोदीरितमोहिनीपदस्य ।
हरचाटुगिरा परास्यमानं परमानन्दमविन्ददङ्गना सा ॥१४॥

ततः कुञ्जे पुञ्जे नवकुसुमपुञ्जे विचरतः
स्वतश्चच्चामीकरनिकररोचीरुचिरया ।
पराधीनस्येव स्मरनिगमपारंगमतया
तया शम्भोरासीद्वत विविधसम्भोगललितम् ॥१५॥

विनाकृताश्चन्द्रकचुम्बिमौलिना
विलासिना या विपिनान्तरङ्गनाः ।
अथान्यथा भूतधियो वियोगतः
परस्परं ताः जगदुः सुदुःखिताः ॥१६॥

अस्माकं विदधे न काननमिदं किं नाम नेत्रोत्सवं
बारंवारमियं दधौ न तटिनी कं वा प्रमोदोदयम् ।
सख्यः संप्रति कम्पयत्यतितरां चेतः सहेतुर्ध्रुवे
दुर्दैवे सति कस्य किं नु सुखदं प्रेयो वियोगो यतः ॥१७॥

पूर्वं येन पटीरपर्वतकुटीसंचारिणा नो मनो
मन्दं गन्धवहेन वल्गुवहता निर्वेदमामोदितम् ।
विश्लेषे हरिणाङ्कभूषणमणेर्हन्ताबलानां पुनः
सन्तापाय स एव साम्प्रतमहो दाक्षिण्यमस्योर्जितम् ॥१८॥

स्पष्टोच्चावचमण्डलं प्रतिदिनं नक्षत्रवंशाग्रणी-
रेकान्तं च निशान्त एव विहरन्नन्तः कुलानांकुलः[1] ।
मुष्णन् दिव्यपदाश्रयेण जनितामप्येव लक्ष्मीं सतां[2]
किंराजेति पदाभिमानमुचितः प्राप्तुं तुषारद्युतिः ॥१९॥

---

1. कुलानां···पाठः कीटदष्टः ।
2. मप्ये···सतां—पाठः कीटदष्टः ।

इष्टं चेतसि दिष्ट्या नो घटयितुं निर्मायमारम्भव-
स्तत्व सम्प्रति किं व्यवस्यति भवः स्मेराननाच्छादनात् ।
यद्यस्थादनवस्थितेन मनसा नास्था पुनस्तत्र ते
तेनैवाद्य न विद्यमानविहरव्यासङ्गभङ्गः कथम् ॥२०॥

अथ तास्त्रिनयनवनितान्तरतापं प्रलापगिरम् ।
पृच्छन्ति स्म पुरःस्थान् वनतरुवीरुन्मृगान्मृगयमाणाः ॥२१॥

## षट्त्रिंशः प्रबन्धः

॥ सारङ्गरागेण गीयते ॥

चलदल कलयसि किल शशिचूडम् ।
परिहृतपरिजनमत्र निगूढम् ।
क्व नु विजने केलिवने । विलसति पशुपतिरिह गहने ॥
॥ ध्रुवपदमिदम् ॥१॥

किरणतरुणतममरुणदृगन्तम् ।
निगद परःशतमन्मथकान्तम् ॥२॥

वटतलनिकटनिकुञ्जमुपेतम् ।
व्यञ्जय मणिमयभूषणमेतम् ॥३॥

वञ्जुलशशधरमञ्जुलवदनम् ।
कदनमदनारिममितसुखसदनम् ॥४॥

चूत तमनुदिननूतनशोभम् ।
स्थगयसि किं विटपेन सलोभम् ॥५॥

केतकि न वदसितं सितभासम् ।
वहसि परं तु कुसुममृदुहासम् ॥६॥

पश्यसि हरिणि चकितनयनकान्तम् ।
दृष्टवती भवती ननु कान्तम् ॥७॥

इति सितिकण्ठवधूजनगीतम् ।
जनयति गदाधरकविसमुदीतम् ॥८॥

इत्थं गन्धवतीप्रतीरविपिने श्रान्ताः समन्तादिमा
भ्रामं भ्राममुमासखं तरुलताः पप्रच्छुरुत्कण्ठिताः ।
जानन्ति स्म सदापि सर्वजगतामन्तश्चरं शङ्करं
मायामीलितचक्षुषामविदुषां शैवं परं नैव तु ॥२२॥

स्वेदोदबिन्दुचयचुम्बितवक्त्रपद्मा
वामाः शिरीषसुकुमारतमाङ्गवल्यः ।
पल्यङ्कतूलशयनोचितपादचारा-
स्ता हन्त दन्तुरितकण्टकितेषु[1] चेरुः ॥२३॥

परिमृज्याप्यवने विजने प्रियं
नहि समीहितसिद्धिमुपेयिवान् ।
कनककूटधराधिपशृङ्खला-
मवततार धुनीमबलाजनः ॥२४॥

ततः स्फुटकुमुद्वतीकुसुमसम्पदामोदिते
तरङ्गशतसङ्गमक्लमहरस्फुरन्मारुते ।
प्रसन्नतुहिनद्युतिद्विगुणशुभ्रिते सैकते
वनभ्रमणवेदनामपनिनाय नारीजनः[2] ॥२५॥

---

1. कण्टकतेपु—इति पाठः ।
2. नारीगण इत्यधिकलेखोऽस्ति ।

किंचन क्वचन विलीनं मन्वानाः काञ्चनाद्रिधन्वानम् ।
अपि निजहृदि निवसन्तं सततं सं गानमङ्गनाश्चक्रुः ॥२६॥

## सप्तत्रिंशः प्रबन्धः

॥ वराडीरागेण गीयते ॥

पुरहर परिजनमिममतिदीनम् ।
परिहर सुभग न सौभगहीनम् ।
······ये······य ······दृशा[1]
नीलसलिलनलिनसदृशा ॥

॥ ध्रुवपदमिदम् ॥१॥

त्वदुपनतं युवतिजनमेतम् ।
पालय पुलिनभुवीशसमेतम् ॥२॥

गणयसि नो ननु परमपराधम्[2] ।
न वदसि खलु तव हृदयमगाधम् ॥३॥

दर्शय वदनसुधाधरबिम्बम्[3] ।
नाशय हृदयतिमिरमविलम्बम्[4] ॥४॥

मधुरमधरमधु पायय कामम् ।
पूरय नो न चिरादिव कामम् ॥५॥

---

1. ···पाठः कीटदष्टः ।
2. गण···नोन···पाठः कीटदष्टः ।
3. दर्शय व···पाठः कीटदष्टः ।
4. नाशय···पाठः कीटदष्टः ।

काममथन भव वारिधियायम् ।
व्यथयति यौवन[1]मुपचितमायम् ॥६॥

तव चरणं शरणं यदि कलितम् ।
किमिव फलं न वरोदरमिलितम् ॥७॥

इति विरहियुवतीचयवचनम् ।
जयति गदाधरसुन्दररचनम् ॥८॥

अथ ताः सिकतालिङ्गे संभृतसलिलप्रसूनसम्भाराः ।
अनिशभयङ्करमाराः शङ्करमाराधयामासुः ॥२७॥

तासां प्रसादसांमुख्यादथ प्रख्यातवैभवः ।
दिदर्शयिषुरात्मानं वेणुमक्वणयद्भवः ॥२८॥

निपीय मुरलीनादं प्रसादं गिरीशस्य ताः ।
ततश्चकितनेत्रान्तास्तत्कान्तास्तर्कमब्रुवन् ॥२९॥

मृद्वीका ध्रुवधारया विरचिता मृद्वी न वेणोरियं
वाणीय शितमम्भवा न मधुना नो साधुना निर्मिता ।
निष्पन्ना सुधया नवा नवनवास्वादा तदा चक्ष्महे
गौरीशाधरमाधुरीधरपरिपाकोऽयमुन्मीलति ॥३०॥

इति निवर्णयन्तीनां मुरलीरवचारवम् ।
रूपं विभ्रन्नवनवं तासामाविरभूत्प्रभुः ॥३१॥

---

1. ···पाठः कीटदष्टः ।

संवीता वनमालया कटितटस्फीतांशुशीतांशुका
तासां लोचनगोचरं समगमच्छ्यामातनुः शाङ्करी ।
प्रौढ़ाखण्डलचापमण्डलमिलत्सौदामिनीशोभिनी
साषाढ़ीनघनाघनाबलिरिवानन्तातिसन्तापनुत् ॥३२॥

विलोक्य वामाः स्तुतमात्तसम्भ्रमाः
समाजमाकस्मिकमागतं जनम् ।
ननन्दुरिन्दीवरसुन्दरेक्षणाः
क्षणादथैकाङ्ककलानिरीक्षणात् ॥३३॥

संपाद्यासनमुत्तरीयवसनं तं पाद्यतोयेन ताः
कम्पाधीनतनूलताः प्रणयिनं सम्पाद्य शम्पारुचः ।
दत्वा कण्टकदर्भसूचीनिचितैरर्घ्यं निदाघाम्बुभि-
र्नेत्रेन्दीवरमालया ललितया संभावयांचक्रिरे ॥३४॥

इति श्रीमदग्निचिन्नित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये
रम्भोरुविप्रलम्भो नाम नवमः सर्गः ।

## अष्टमः सर्गः

इत्थं विप्रकृताभिरप्यतितमां निर्मानमानन्दितः
संवीतोऽथ नितम्बिनीभिरभितो गोपालिनीवल्लभः ।
निस्तन्द्राननचन्द्रबिम्बविगलत्पीयूषधारायिता-
मेतासामुचितामवोचत गिरं मन्दाक्षमन्दाक्षरम् ॥१॥

सीमन्तिन्यो विपिनभुवि यल्लम्भिता विप्रलम्भं
यूयं भूयः प्रणयमतयोऽत्यन्तरेणैव मन्तुम् ।
क्षन्तव्यं तन्मम हिमकरद्योतविद्योतमानां
नानाभोगैर्नयत रजनीं सार्द्धमेतां महेशः[1] ॥२॥

ततः स्रवन्ती पुलिनस्थले पुनः
प्रमोदयिष्यन् प्रमदाजनं भवः ।
पुरेव संकल्पितरूपवैभवः
प्रवर्त्तयामास स रासमम्पदः ॥३॥

### त्रिंशः प्रबन्धः

( भैरवरागेण गीयते )

काचन मनसिजविभ्रमशिथिलितसकुसुमकुन्तलभारा ।
चञ्चलकनकघटस्तननिपतितवर्त्तुलनिस्तुलहारा[2] ॥
रासे पुररिपुणा । सह विललास निपुणा ॥
॥ ध्रुवपदमिदम् ॥१॥

---

1. सार्द्धमेतां···पाठः कीटदष्टः ।

2. निस्तलहारा—इति पाठः ।

कापि विकासपरिश्रमधर्मसलिलकणचुम्बितभाला ।
हिमजलविन्दुनिचितविकचाम्बुजसहजमुखी वरबाला ॥२॥

कापि शिथिलपरिधानपटस्फुटदर्शितविपुलनितम्बा ।
कण्ठकलितसितिकण्ठनिपीतसुधामधुराधरविम्बा ॥३॥

प्रमुदितमृगमदपत्रकचित्रघटस्तनघट्टनकान्तम् ।
हरपरिरम्भणमुदितनितम्बवती खलु कापि नितान्तम् ॥४॥

काचन विचलदामललामकमुपददती हरवामा ।
नागवल्लीदलकवलमनुग्रहमलभत संभृतकामा ॥५॥

सरसदशननखरक्षतपुलकितमदनवशम्बददेहा ।
कापि कुसुमसुकुमारितमा युवती समुदितमदेहा ॥६॥

काचिदुपाहितमृगमदकुङ्कुमचन्दनचन्द्रविलेपा ।
प्रियतमप्रियचरणोदितसम्भ्रमकलितसकलतनुवेपा ॥७॥

इति रमणीयगिरिशरमणीगणरासविलासचरित्रम् ।
सुखयतु रसिकगदाधरकविवरवर्णितमखिलपवित्रम् ॥८॥

एवं देवशिखामणिस्त्रिजगतामानन्दयन्मानसं-
चक्रे रासरसं वरांवदमना अप्यङ्गनाप्रीतये ।
तत्कौतूहलदर्शनाकुलतया ताराभिराराधितो
नूनं पार्वणशर्वरीरतिरभून्मध्येऽम्बरं मन्थरः ॥५॥

वन्दे वृन्दारकाणां मुरहरकमलावाससंक्रन्दनाद्यैः
रासक्रीड़ां स्मरारेस्त्रिभुवननयनानन्दनां द्रष्टुकामैः ।
हैमैर्माणिक्यमुक्तामणिकिरणगणभ्राजमानैर्विमानै-
र्व्याप्याकाशावकाशानहमहमिकया संकुलं तत्र तस्थे ॥५॥

नृत्यन्तीभिः पयोदावयवनवपुर्वीवरश्रीतविन्नीभिः
शिञ्जन्मञ्जीरभीरध्वनिभिरभिनिभृतकर्योमरङ्गान्तरङ्गैः ।
गायद्भिः पातलालव्यविकलपदालानतेनोपबन्धं
गन्धर्वैश्च प्रबन्धं वनभुवि मुमुदे रासलीलासु देवः ॥६॥

प्रसूनानां वर्षं जनितहरहर्षं प्रतिपदं
वितन्वन्तः सन्तर्पितहृदयनेत्रा दिविषदः ।
तदा शम्पाकम्पावहसहजलक्ष्मी वसतिभि-
र्वरस्त्रीभिः शम्भोरनुमुमुदिरे रासललितम् ॥७॥

## ऊनत्रिंशः प्रबन्धः

( कामोदीरागेण गीयते )

॥ अध्रुवगीतम् ॥

वसुमति ननु भवतीमम् । सेवितवत्यसि भीमम् ।
यदयमरुणचरणेन[1] सखि त्वयि विचरति[2]
सदयमसीमम् ॥१॥

सा खलु सौभगसारा । उदितमनोजविकारा ।
या मदनाङ्गविनाशनसङ्गमलभतयुवतिरुदारा ॥२॥

इयमधिमेदिनीवन्या । कथमिव भवतु न धन्या ।
येन समं दयितेन रसादिह विहरति गिरिवरकन्या ॥३॥

---

1. यदयमतुराचरणं न—इति पाठः ।
2. वचति—इति पाठः ।

गन्धवती सरिदेषा　।　ननु कृतसुकृतविशेषा ।
या पुरारिपुरविलासविलोकनसञ्चितकुसुमसुवेशा ॥४॥

पश्यत सूनसहासम्　।　वनलतिकालिविलासम् ।
हरकरकिशलयसङ्गसुखाहितकोरकपुलकविकाशम ॥५॥

सैकतमिदमतिकान्तम्　।　चेतो हरति नितान्तम् ।
रमयति यत्र मदिरनयनाजन उदितमुदं निजकान्तम् ॥६॥

मृगरमणि स्मरसारम्　।　पश्यसि गिरिशविहारम् ।
नयनयुगं तव सफलमभूदनुरागतरलतरतारम् ॥७॥

इति सुरसं समुदीतम्　।　रसिकगदाधरगीतम् ।
मदयतु सज्जनचित्तममृतमिव कर्णपुटेन निपीतम ॥८॥

रासावेशपरिश्रमप्रसृमरस्वेदाम्बुसार्द्राम्बराः
क्लिद्यत्कुङ्कुमपङ्कपत्रकपरिम्लानाननाम्भोरुहाः ।
रम्भोरूरवगम्य मानसमभूदम्भोविहाराद्दतं
शम्भोर्गन्धवतीमगाहत तत. सार्द्धं सतीभिर्वृत.[1] ॥८॥

निपीय नीलोत्पलनीलचक्षुषा हरं तमेषा विहरन्तमन्तिके ।
चिरोत्सुका[2] कामुकमङ्कमागतं समालिलिङ्गे व तरङ्गबाहुना ॥६॥

सहजशीतलनिर्मलचारुणि प्रणयिनं परितः सरितः प्रियाः ।
पयसि वभ्रमुरभ्रमुवल्लभं परिगता इव मत्तकरेणवः ॥१०॥

---

1. वृतमिति—पाठ ।
2. ···पाठः कीटदष्टः ।

यत्कस्तूरीरचितमकरीमण्डनं गण्डदेशा-
दास्यं रागं कुचाभ्यां ...... ...... ...[1] ।
मज्जन्तीनामहरत दृशः कज्जलं कामिनीना-
मेतत्कोपादभवदरुणं लोचनं नूनमासाम् ॥११॥

अन्तं सन्तमसे[2] समग्रवपुषा नीते तुषारत्विषा
स्पष्टं तस्य रुचा विविच्य कुमुदस्तोमे च नालक्षिते ।
आकण्ठं तटिनीनिमग्नतनुभिः फुल्लाननाम्भोरुहै
रम्भोरूनलिनीवनस्य च दिवा मन्दा बभौ सा निशा ॥१२॥

इति सलिलविहारं योषितं स्वाङ्गहारं
पशुपतिरनुभूय प्राप्तकामोऽपि भूयः ।
उदतरदनुतीरं[3] नीरतो गन्धवत्याः
स्फुटतररमणीयातानसोपानवत्याः ॥१३॥

स्तिमितचीननिचोलपरिस्फुटस्तनतटोरुनितम्बससंभ्रमाः ।
चकितचारुचमूरुविलोचनास्त्रिनयनाय मुदं ददुरङ्गनाः ॥१४॥

प्रियसलीलविलोकनलाज्जताः
पुलकवेपथुसान्द्रतनूलताः ।
जुगुपुरङ्गविकारमनङ्गजं
सलिलशैत्यभराभिनयेन ताः ॥१५॥

नानाकाराङ्गरागानथ सुरनगरीदुर्लभानम्बराणि
स्त्रीणां ताम्बूलपेटों पुरटमणिमयीं वीटिकां पूर्णगर्भाम् ।
कामं मालाविशालाः सुरभिसुमनसामञ्जनालक्तवेशान्
संकल्पेनोपनिन्ये सकलमिदमुमाकान्त एकान्त एव ॥१६॥

---

1. पाठोल्लेखो नास्ति ।
2. ......पाठः की दृष्टः ।
3. ...त...नु...पाठः की दृष्टः ।

कान्तानामतिरुचिराम्बराङ्गरागैः
कान्तानामतिकनकाम्बुजाननानाम् ।
अन्तः संसदि विरराज चन्द्रचूड-
स्ताराणामिव दिवि पर्वशर्वरीन्द्रः ॥१७॥

अत्रान्तरे वनभुवि जलजापराधा[1]-
च्छङ्केऽनुभूय विनिपातमुदन्यदङ्के ।
राजन्यपेतवति हन्त तमोऽपहन्तु-
मङ्गीचकार महसा प्रभुरग्र एव ॥१८॥

कियानयं भानुमतो महाभरो
यदुच्यते पार्वणतामसाशनम् ।
अनूरुरप्यस्य पुरःसरस्तमः[2]
समूलकाषं कषति स्म रोचिषा ॥१९॥

तदनु कमलवक्त्रं पद्मिनीनां कराग्रैः
समसमयमनेकैर्लालयन्नंशुमाली ।
प्रकटविपुलरागो गाढतद्विप्रलम्भा-
दिव दिवसमुखेऽभूत्कुङ्कुमक्षोदबिन्दुः ॥२०॥

तीरेऽथ बिन्दुसरसः परिकल्प्य देवी-
रादिश्य सिद्धवनमध्यचरीं च गौरीम् ।
ईशान् दिशासु विनिवेशितवानधीशः
पारेदधीचिसरितः परमेकमूर्त्तिम् ॥२१॥

---

1. अत्रान्तरे दिजनजापराधा इति पाठः ।

2. पुरःसर···पाठः कीटदष्टः ।

इत्थं वशीकृतमना अपि नाकभोगं
संकल्प्य योनिवशवर्त्तित एव देवः ।
स्त्रीभिः समं समनुभूय स भूयसीभि-
र्लोके चिरं प्रथयति स्म यशः प्रशस्तम् ॥२२॥

पत्रात्तत्रावतीर्य्य त्रिदशपरिषदामर्द्धमर्द्धेन्दुमौलेः
स्नष्टाथाष्टासु तीर्थेष्वभिहितविधिना स्नानदानादिपूर्वम् ।
लिङ्गान्यभ्यर्च्चर्य गङ्गायमुनमनुदिशि प्राप्य दक्षापरस्या-
मेकान्ते ब्रह्मलिङ्गं प्रणयभरनमत्कन्धरं संददर्श ॥२३॥

गणाधीश-गोपालिनी-बाहुलेयान्
वृषं चण्डरुद्रं ततः कल्पवृक्षम् ।
स्तसावित्रीस्तल्लिङ्गमित्यष्टमूर्त्ती-
र्ववन्देऽरविन्दासनोऽत्र क्रमेण ॥२४॥

सहस्रेणोपचारेण[1] तदाराध्य हृदा विधिः ।
विधिना भुवनेशानं सानन्दमिदमुज्जगौ ॥२५॥

## चत्वारिंशः प्रबन्धः

( तोड़ीरागेण गीयते )

मधुसमयकुसुममयवल्लिपुञ्जे ।
लिङ्गराजं नौमि राजतमेकान्तकुञ्जे ॥
॥ ध्रुवपदमिदम् ॥१॥

कोकिलावलीकलितकाकलीके ।
लिङ्गराजं नौमि मधुलोलमधुपावलीके ॥२॥

---

1. सहस्रेणोपचाराणामिति पाठः ।

मन्दहिमगन्धवहसततसङ्गे ।
लिङ्गराजं नौमि विहरन्तमिह विपिनरङ्गे ॥३॥

प्रणतपुरुहूतमुखसुरसमाजे ।
लिङ्गराजं नौमि सखि सुखितराजराजे ॥४॥

कल्पतरुसूनगुरुगन्धसारे ।
लिङ्गराजं नौमि शुकसारिकारावतारे ॥५॥

रचितगोपालिनीचित्तमोदे ।
लिङ्गराजं नौमि मृगविहगपरीतामोदे ॥६॥

इह सहजकान्तिदलितान्धकारे ।
लिङ्गराजं नौमि स भवन्तमहमन्धकारे ॥७॥

इति रसिकमान्धातृसरसगीते ।
लिङ्गराजं नौमि श्रुतिमन्तममरेशगीते ॥८॥

एवं कृतबहुसेवं देवं त देवलोकपालानाम् ।
अनुगृह्णन्निजरूपं दर्शयति स्म स्मरारातिः ॥२६॥

तत्रासौ चन्द्रचूडं सितललितमुखं नागयज्ञोपवीतं
त्र्यक्षं शार्दूलसाराजिनवसनधरं कुन्दकर्पूरगौरम् ।
गौरीवामाङ्कदेशं वरपरशुमृगाभीतिहस्तं महेश
रवालङ्कारवेशं सरसिरुहसमासीनमालोकते स्म ॥२७॥

अथ नेत्रमन्तमतिशान्त[1] विग्रहं
प्रणतप्रसादसुमुखं प्रियासखम् ।
सुरसत्तमाः सममिमं महर्षिभिः
समसंस्तुवन् प्रमदगद्गदाक्षरम् ॥२८॥

---

1. अथ···पाठः कीदृष्टः ।

श्रीशङ्कराकल्पकपालजाल
पायादयाप्लावित[1]भूरिभूत ।
वित्रासितांश्चात्र[2] विमानयान-
मानाहमानामृत मृत्युमृत्यो ॥२६॥

## एकचत्वारिंशः प्रबन्धः

( सौधबन्धः )

जय जय देव जगत्त्रयनायक । जयपदनम्रपरमपददायक ॥१॥
जय मुनिमानसविषदमरालक । जय जगतीतलमण्डलपालक ॥२॥
जय धरणीगुरुभारविनाशक । जय कृतदर्पकदर्पकशासक ॥३॥
जय सुरसिंहदनुजकरिदारण । जय हरपरशुवराभयधारण ॥४॥
जय सुन्दरसरसीरुहलोचन । जय भव भवभयसङ्कटमोचन ॥५॥
जय धृतखण्डकलानिधिमण्डन । जय शरणागतदुर्गतिखण्डन । धीर ॥३॥

प्रपन्नपारिजातक । प्रतीपदुष्टघातक ॥१॥
प्रफुल्लवारिजानन । प्रियैकचूतकानन ॥२॥
प्रसूनचापसुन्दर । प्रभिन्नगन्धसिन्धुर ॥३॥
प्रभो भुजङ्गभूषण । प्रणष्टसर्वदूषण ॥४॥
प्रकाशिताखिलांशक । प्रणामदुःखनाशक ॥५॥
स्वभक्तभोगदायक । प्रभूतभूतनायक ॥६॥

1. पायादयाप्लावित—इति पाठः ।
2. वित्रस्तश्चरस्तत्र—इति पाठः ।

प्रियागुणौघसंदित । त्रिलोकलोकवन्दित ॥७॥

प्रकामसुन्दरस्मित । क्षमाधराग्रसुस्थित । धीर ॥८॥

जय जय हर करुणारससागर ।
गरलकवलसुखभक्षणलालस लसदिन्दीवररुचिहरकन्धर ॥१॥

धरणिधराधिपनिरुपमपूजित जितसितकुन्दमुकुन्दरदसुन्दर ॥२॥

हर हसिताननशारदसितकर ।
करतलशोभित[1] तर्जितकिशलय सलयनटनपरिशीलन नटवर ॥३॥

वरदविषयविमुखाशयनिर्जित ।
जितघनसारकुमुदवनसौभग भगनयनद्वयपाटनपटुतर ॥
धरणीधनञ्जय शशिनयनत्रय । धीर ॥४॥

मनो न नो मदनदमदयादरदर्पितम् ।
हितं ततं स्मरहर स्मर न स्मो नरस्म ते (?) ॥३०॥

अमन्दानन्दसन्दर्भस्यन्दनेत्राम्बुबिन्दुभिः ।
भुवं सिञ्चन् हरं तत्र स्तुवन्देवपतिर्जगौ ॥३१॥

जय जय शिव शम्भोरुह मयि सञ्चारय तरुणम् ।
सम्भृतकरुणम् ॥१॥

भवदवसन्तापं यमहमवापं प्रशमय शिवतम तमपनयम् ।
शिक्षय विनयम् ॥२॥

भगवति निरवद्ये विलसतु हृद्ये भवतु मनो मम हरनिरतम् ।
भवसुखविरतम् ॥३॥

---

1. हसिताननशा''' पाठः कीटदष्टः ।

रुचिनिर्जितकमलं धुतकलिशमलं भवतु सदाशिव तव चरणम् ।
मामकशरणम् ॥४॥

तव भुवनपवित्रं प्रतिपदचित्रं हरति मनो मम शुभ्रचरितम् ।
गुणगणभरितम् ॥५॥

त्वयि कृतपदसेवा बिभ्रति के वा परम न लोके परमुदयम् ।
परिभूतभयम्[1] ॥६॥

धरनरपतितनुजानायक[2]दनुजासुरसुरकिंनरनरवरदम् ।
नमदेकरदम् ॥७॥

कथमिव न[3] भजन्तं स्वजनमवन्तं भवतु विवेकिजनोदयितम् ।
निज हृदि नियतम् ॥८॥

## द्विचत्वारिंशः प्रबन्धः

( मङ्गलगुर्जरीरागेण गीयते )

कलितसुधानिधिमण्डन, कलिखण्डन, ललितभुजङ्गमहार ।
जय जय लोकपते ॥ ध्रुवपदमिदम् ॥१॥

सिन्धुरजननकुमारक, पुरमारक, शीलितशैलविहार ॥२॥

समविकशम्बरशासन, मदनाशन, नयनधनञ्जयकील ॥३॥

रासरसिकगुणनागर, गुणसागर, भुवनमनोहरलील ॥४॥

1. लोक···पाठः कीठदष्टः।
2. पति···क—पाठः कीटदष्टः ।
3. कथ···पाठः कीटदष्टः ।

बाणमहोदधिनायक, गणनायक, निरुपममहिमगभीर ।।५।।

प्रथमचमूसमुपासित, यमुनासित, कन्धरतनुजितहीर ।।६।।

मुनिजनचित्तनिकेतन, वृषकेतन, निगमान्तरपरिगीत ।।७।।

सुकृतनिदानगदाधर, कृतसादर, मञ्जुलमङ्गलगीत ।।८।।

भद्रं शिवाय चन्द्रशेखर बहन्दीनावने लालसां
सद्भावप्रणयप्रसाररसिक स्वीकृत्य यां मृत्युतः ।
सत्यालीकविनिश्चयस्फुरणतः स्वान्तःस्थितं वाञ्छितं[1]
तं त्वां यो जपते महान्स समतः[2] सांमुख्यतः सुस्थितम्[3] ।।३२।।

इति तं कृतबहुमाना विमानयानाः प्रसन्नगम्भीरम् ।
वरयत वरमिति धीरं वदन्तमाचचक्षतानन्दाः ।।३३।।

एवं विभो विसमयत्न[4]कृतोऽतिय(?) त्वां
वेदान्तवेद्यमिममद्य विलोकयामः ।
तत्किं घटेत तव देवजनानुकम्पां
सम्पादनीयमधिकं किमतः परं ते ।।३४।।

एतावत्परमत्र नस्त्रिजगतां क्षेमार्थमाकाङ्क्षितं
वर्त्तेरन्निजकर्मनिष्ठिततमा वर्णाश्रमा ये प्रभो ।
रक्षेयुः पृथिवीमलोलुपधियो भूपाः प्रजानां भवे
त्वत्पादाम्बुजसौरभे रसिकता चेतो निचेत(?)स्ततः ।।३५।।

---

1. स्वा···पाठः कीटदष्टः ।
2. महान्मसमत—इति पाठः ।
3. कविकाव्यनामचक्रबन्ध इत्यधिकलेखोऽस्ति ।
4. त्यत्न—इति पाठः ।

ओमित्युक्तवते प्रणम्य भुवनाधीशाय धीशान्तये
पर्य्याप्तं भवदावतप्तमनसां तस्यैव लीलामृतम् ।
पाथेयं हृदयङ्गमं पथि रसादास्वादयन्तो ययुः
स्वानि स्वानि निकेतनानि विबुधाः पद्माङ्कसद्मादयः ॥३६॥

प्रालेयाचलनन्दनापतिपदप्रत्यग्रपङ्केरुह-
द्वन्द्वामन्दमरन्दविन्दुमहिमप्रेमप्रसादोदयम् ।
कौण्डिन्यान्वयदुग्धसिन्धुरजनीवन्धोः प्रबन्धोत्तम
नित्यानन्दकवेर्निवेदतमिमं संशोधयध्वं बुधाः ॥३७॥

इति श्रीमदग्निचिन्नित्यानन्दपण्डितकृते शिवलीलामृते महाकाव्ये
[शिवप्रसादनं नाम] दशमः सर्गः ।

॥ समाप्तोऽयं ग्रन्थः ॥

# श्लोकानुक्रमणिका

## प्रबन्धानुक्रमणिका



———

## ग्रन्थप्रवहृत—रागानुक्रमणिका

| रागाणां नामानि | सर्गसंख्या: | प्रबन्धसंख्या: |
| --- | --- | --- |
| आशावरी | १,२ | ६,१०,१२ |
| कल्याण आहारी | १ | ५ |
| कामोदी | ३,४,७,१० | १४,१८,२८,३६ |
| केदार | १,२ | ८,१३ |
| गुज्जरी | १,८ | २,१३ |
| गुण्डकिरी | ४,५ | २०,२१ |
| गौरी | ५ | २२ |
| तोडी | १० | ४० |
| देशाख्य | १ | ४ |
| नाटक | १ | १ |
| भैरव | १,४,१० | १,१६,३८ |
| मङ्गलगुज्जरी | ५,७,१० | २३,३०,४२ |
| मल्लार | १,३ | ३,१६ |
| मारु | २,८ | ११,३२ |
| मालवश्री | ३ | १७ |
| मुखावरी | ६,६ | २४,३५ |
| वङ्गलाश्री | ६ | २५ |
| वराडी | ६ | ३७ |
| वसन्त | १,३,७ | ७,१५,२६ |
| सारङ्ग | ८,६ | ३३,३६ |

———

## तालसूची

| तालनामानि | सर्गसंख्या | प्रबन्धसंख्या |
|---|---|---|
| अट्टु | १ | ७ |
| आदि | १ | १ |
| एक | १ | ६ |
| कुडुक | २,७ | १३ ३० |
| झम्पक | १,२,४ ५ | ५,८ १२ २० २२ |
| त्रिपुटा | १ | ६ |
| देढ़ी | ४ | १६ |
| निसारी | १ | ३ |
| पडि | ३ | १५ |
| मण्ठ | १ | ४ |
| यति | १ | २ |

— —

## छन्दसामनुक्रमणिका

| छन्दसां नामानि | सर्गसंख्या | श्लोकसंख्या |
|---|---|---|
| द्रुतविलम्बितम् | २ | १४ १५ |
| | ३ | २२ |
| | ४ | १२ १७ २१ |
| | ५ | ५ |
| | ७ | १ २ ३ |
| | ८ | २० |
| | ६ | ६ ११,२४ |
| | १० | १० १४ १५ |
| नर्दटकम् | २ | २० |
| पञ्चचामरम् | ७ | २३ |
| पुष्पिताग्रा | ८ | ७ |
| पृथ्वी | १ | १० २१ |
| | २ | ११ |
| | ५ | २० |
| | ७ | २२ |
| | ६ | १ १२ २५ |
| प्रमिताक्षरा | ३ | २४ |
| | ६ | १६ |
| | ८ | २८ |
| प्रहर्षिणी | ५ | २१ |
| | १० | १७ |
| भुजङ्गप्रयातम् | १० | २४ |
| मञ्जुभाषिणी | १ | २५ |
| | २ | २ |
| | १० | २८ |

| छन्दसां नामानि | सर्गसंख्या | श्लोकसंख्या |
|---|---|---|
| मत्तमयूरः | ४ | २४ |
| | ५ | १३ |
| मन्दाक्रान्ता | ७ | २६ ३२ |
| | १० | २१,१ |
| मालभारिणी | १ | १६ |
| | ६ | २२ २३ |
| | ९ | १४ |
| मालिनी | २ | ५ |
| | ३ | ५ ६ |
| | ४ | २७ |
| | ६ | १२ १७ |
| | ७ | १३ १६ १८.१९,२० |
| | १० | १३.२० |
| रथोद्धता | ३ | १३ १४ १७ |
| | ५ | १ २ ३ ७ ९ |
| वंशस्थविलम् | २ | ९ १० १६,१८.१९ |
| | ३ | १,३ ४ ७ ८ १० १५ १९ २०.२१ |
| | ४ | १.६ १० १४.१८ |
| | ५ | ११.१७ |
| | ६ | १ २ ४ ५.६ ७.१४ २७ |
| | ७ | २४ २६ २७ |
| | ८ | १.२.१० ११ १३ १५ १७ २१ २२,२३ |
| | ९ | २.१६.३३ |
| | १० | ३.९ ४९ |

| छन्दसां नामानि | सर्गसंख्या | श्लोकसंख्या |
|---|---|---|
| वसन्ततिलकम् | १ | ५,८,१५ |
| | ३ | १६,१८ |
| | ५ | १६,१९ |
| | ७ | ६,७,१० |
| | ८ | ९,१९ |
| | ९ | २३ |
| | १० | १८,२१,२२.३३ |
| वियोगिनी | ४ | १५ |
| शार्दूलविक्रीडितम् | १ | ३,४,९ १२,१४ १८,१९.२० |
| | २ | ३.४,१२,१३ २३ |
| | ४ | ३,४ ६,८ ११.१६ २० २२ |
| | ५ | ४ १०,१२.१३.१४,१५.२५ |
| | ६ | ८,९ ११.१८ १९ २१,२५ |
| | ७ | ८,२१.२५ |
| | ८ | ३ ४ ५.६.२५ २६ २७.२९.३० |
| | ९ | ३,४ ५ ७ ८ १७ १८,१९,२० २२ ३०. ३२ ३४ |
| | १० | १,४,८.१२ ३१ ३४ ३५.३६ |
| शालिनी | ६ | २६ |
| | ७ | ३०,३१ |
| शिखरिणी | १ | २४ २६ २७ |
| | २ | १ ६ ८.२१ |
| | ४ | २ |
| | ५ | १८ |
| | ७ | ५ १२ |
| | ९ | ६.१३.१५ |
| | १० | |

| छन्दसां नामानि | सर्गसंख्या | श्लोकसंख्या |
| --- | --- | --- |
| स्रग्धरा | १ | १,२,११ |
| | २ | १७ |
| | ३ | २,११,१२,२६ |
| | ४ | ५ |
| | ६ | २४,२६ |
| | ७ | ६,११,३४ |
| | ८ | १४,१८ |
| | १० | ५,६,१६,२३,२७ |
| स्वागता | ७ | ४ |
| हरिणी | २ | २२ |

---

# BIBLIOGRAPHY


***Sanskrit*** :

1. Rāsagosthi rupakaṃ— O. S. M —Mss. No. L. 319.
2. Srīkṛṣṇalilāmṛtamahākāvyaṃ-O. S. M —Mss. No. L. 254.
3. Abhinavagitagovindamahākāvyaṃ-Ed. by Sri B. Panda, D. C. A. Edn. 1977.
4. Rukmiṇīpariṇayamahākāvyaṃ Ed. by Sri B Panda, D. C. A. Edn. 1974.
5. Mukundavilāsmahākāvaymṃ— O. S. M.—Mss. No. L. 182.
6. Nīladrināth Satakaṃ—U. U.—Mss. No. L. 215.
7. Sivapurāṇa-Uttarakhanda – O. S. M—Mss. No—P-45.
8. Ekāmra Purāṇa-Published by Laxmidhar Garabadu.
9. Svarṇadrimahodaya-Published by Ratnakar Garabadu, 1912.
10. Kumarsaṃbhavaṃ-Kalidasa Granthāvalī—S. Chaturvedi, 1962.
11. Kapilasaṃhitā—Ratnakar Gargavatu, Cuttack, 1928.

***English*** :

12. A Descriptive Catalogue of Sanskrit Manuscripts, Vol II, Sri K N Mohapatra, 1960.
13. Archaeological Remains at Bhubaneswar—Dr. K. C. Panigrahi, 1961.
14. History of Classical Sanskrit Literature-M. Krishnamachariar. 1974.
15. Purana Index—Vol I, R R. Dixitar, 1951.
16. Purana Index. – Vol II, R. R. Dixitar, 1955.

***Oriya*** :

17. Srī Jayadeva O Srī Gītagovinda – Sri K. N. Mohapatra. 1973.
18. Sāralā Mahābhārata—Ed. by-Dr. A. B. Mohanty.


---